वर्षम् 72
अङ्कः -12
आश्विनमासः
विक्रमाब्दः 2079
युगाब्दः 5124
अक्टूबर, 2022

ISSN 2249-698X

# भारती
## संस्कृत-मासपत्रिका

एकस्याः प्रतेः १५/-
वार्षिक-शुल्कम्
१५०/-
पञ्चवार्षिकशुल्कम्
७००/-
पञ्चदशवार्षिकशुल्कम्
२१००/-

प्रकाशन प्रत्येक माह की 1 तारीख



प्रधानमन्त्रिवर्योऽभूत् शास्त्री लालबहादुरः।
सश्रद्धं यो हि मासेऽस्मिन् स्मर्यते जन्मवासरे।।

श्रीलालबहादुरशास्त्री
( ०२/१०/१९०४ - ११/०१/१९६६ )

# विषय-सूची


| क्र.सं. | विषयाः | निबन्धकाराः | पृष्ठ-संख्या |
|---|---|---|---|
| १ | सम्पादकीयम् | प्रोफेसर श्रीकृष्णशर्मा | ४ |
| २ | श्रीलालबहादुरशास्त्रिणः नवाचाराः | डॉ. नाथूलालसुमनः | ६ |
| ३ | सुगुरवोऽनन्तादिरामोत्तराः | प्रो. ताराशंकरशर्मा पाण्डेयः | ८ |
| ४ | संस्कृतसमाचाराः | सम्पादकः | ९ |
| ५ | तव कथामृतम् | आचार्यः पं. नथमलशास्त्री दाधीचः | १० |
| ६ | श्रीनारायणशतकस्याद्याः षट् श्लोकाः | पण्डित अमरदत्तशर्मा | १२ |
| ७ | रम्या रामायणी कथा | प्रो. डॉ. योगिनी हिमांशु व्यासः | १३ |
| ८ | समागतः स्वतन्त्रताया अमृतोत्सवः शुभः | डॉ. प्रीतिः पुजारा | १५ |
| ९ | संस्कृते महाकाव्यपरम्परा तदितिहासश्च | मंजु जाटः | १६ |
| १० | श्रीलालबहादुरशास्त्रिशतकानुशीलनम् | डॉ. बाबूलालः मीना | २१ |
| ११ | पुस्तक-समीक्षा | महामहोपाध्यायदेवर्षिकलानाथशास्त्री | २४ |
| १२ | नारीस्तम्भः | डॉ. राजेश्वरी भट्टः | २६ |
| १३ | आयुर्वेद-स्तम्भः | प्रो. बनवारीलालगौडः | २९ |


## पाठकेभ्यो निवेदनम्

संस्कृतसुधियः पाठकाः निवेद्यन्ते यद् भारत्यां प्रकाशिताः शोधलेखाः, सामयिकनिबन्धाः, कविताः, कथाः, विनोदवार्ताः, लघुनाट्यकृत्यादयो भवद्भ्यः कथं रोचन्ते? स्वविचारयुक्तपत्राणि निम्नलिखितसङ्केतोपरि संप्रेष्यानुगृह्णन्तु- **सम्पादक, 'भारती' संस्कृतमासिक, भारतीभवन, बी-15, न्यू कॉलोनी, जयपुर-302001**

**दूरभाषः 0141-2379014, मो. 9799011085**

(धनादेश/चैक/ड्राफ्ट केवल ''भारतीय संस्कृत प्रचार संस्थान'' के नाम से ही भेजें- प्रबन्ध सम्पादक)

ISSN2249-698X

।। श्रीशः ।।

# भारती

## संस्कृत-मासपत्रिका



कार्यालयः
बी-15, भारतीभवनम्
न्यू कॉलोनी, जयपुरम् ( राज. )
ई-मेल sanskritbharti09@gmail.com
वेबसाईट : www.bhartipatrika.org

वर्षम् 72 अङ्कः -12
आश्विनमासः
विक्रमाब्दः 2079
युगाब्दः 5124
अक्टूबर, 2022

एकस्याः प्रतेः 15/-
वार्षिकशुल्कम् 150/-
पञ्चवार्षिकशुल्कम् 700/-
आजीवनसदस्यताशुल्कम् 2100/- ( 15 वर्षाणि )

सम्पादकीयम्

# शुद्धात्मा देशभक्तश्च सत्यनिष्ठो बहादुरः

...✍ प्रोफेसर श्रीकृष्णशर्मा

भारतवर्षः 1962 खीष्टाब्दे विश्वासघाति- 'चीन' देशात् पराजितोऽभूदिति लज्जास्पदघटनया तदानीन्तन-प्रधानमन्त्री पण्डित-जवाहर-लाल-नेहरूः खिन्नचेताः सन् रुग्णप्रायोऽभवत्। 27.05.1964 दिनाङ्के स दिवं गतः। 09.06.1964 दिनाङ्के विद्याविनयसम्पन्नः प्रकृत्या चारुस्तथापि शिलोच्चय इव दृढो **लालबहादुरशास्त्री** द्वितीयप्रधानमन्त्रित्वेन शपथमगृह्णात्। चीनदेशाद् विजितकारणाद् राष्ट्रियनेतारोऽपि ग्लानिपङ्के निमग्ना आसन्। एतादृशमवसरं वीक्ष्य भारतं क्षीणशक्तिकं मन्वानः 'पाकिस्तान' देशः दुःसाहसं कृत्वा सहसाऽऽक्रमत।

राष्ट्रभक्तः प्रधानमन्त्री शास्त्रिमहोदयः सेना-नायकान् आह्वयत् यद् शत्रुदेशं प्रति इष्टकानाम् उत्तरम् अस्माभिः प्रस्तरैर्विधेयम्। सोत्साहम् अस्माकं सैन्यबलम् पाकदेशेऽन्तःप्रविश्य तं पराजितवान्। भीत-भीतः पाकदेशोऽमेरिका-रूसेदेशौ युद्धविरामाय प्रार्थयत। वयं सर्वे जानीमो यत् **ताशकन्द**नगरे (उज्बेकिस्तान) शान्तिवार्त्तायां छलानुप्रवेशाद् शास्त्रिमहोदयाः 11.01.1966 दिनाङ्के अकालमृत्युना लोकमिमं पर्यहार्षुः। भारतदेशाय शास्त्रिणो विजयोपहारं प्रदत्तवन्तोऽस्मात् कारणात् यमुनातीरेऽन्त्येष्टिस्थलस्य सञ्ज्ञाऽभवद् '**विजयघाट**' इति।

शास्त्रिमहोदयाः न्याय्याचारस्य, आर्जवस्य देशभक्तेश्च साक्षान्मूर्त्तय आसन्। अत्र कानिचन तेषां रोचकतथ्यानि स्मर्यन्ते -

(1) यदा ते रैलमन्त्रिण आसन् रैलयानस्य प्रथमश्रेणीकक्षे समासीनाः सन्तो मुम्बई-यात्रायां प्रवृत्ता अभवन्। तत्र शैत्यमनुभवन्तो निजी-सहायकं 'कैलास' नामानं प्राहुः - रैलकक्षाद् बहिस्तापस्तर्हि अत्र शैत्यं कथम्? कक्षेऽस्मिन् तापहरो यन्त्रः (Cooler) संलग्नः इत्यवदद् निजी-सहायकः। 'मामनभिधाय कथमयमुद्योगः' इत्येवं तीक्ष्णदृशा प्रधानमन्त्री प्राह यतोऽन्यैर्जनैः न सह्यते किं तापः? अपसार्यतामयं तापहरो यन्त्रः (Cooler)। अग्रिमे रैलयानविश्रान्तिस्थले '**मथुरायां**' सोऽपसारितः। अतः परं ते तृतीयश्रेण्याः कक्षेऽगच्छन् तत्र तु विद्युत्-प्रेरितं व्यजनम् (FAN) इत्यस्य सौविध्यं अपि नासीत्, तदारभ्य प्रारभत।

(2) एकदा मध्याह्नभोजने आम्रफलानि दृष्ट्वा पत्नीं 'ललिता' महोदयामवदत् - बाहुल्येन भारतीयजनता साधारणभोजनं लभते, मह्यमपि तादृशमेव रोचते। बाह्यवस्तु भोजने मह्यं न रोचते। अग्रेऽवधेयम्।

(3) एकदा शास्त्रिणः पत्न्या सह शाटिकां क्रेतुं हाटके विपणिं गताः। शाटिकां क्रेतुमादिष्ट आपणिको महार्घां शाटिकां प्रास्तोत्। महार्घेयम् शाटिकाऽल्पमूल्यां दर्शयतु-इति शास्त्रिणः प्रोचुः। सौभाग्यमस्माकं

यदस्माकं विपण्यामस्माकं प्रधानमन्त्री समागतः, अतश्चेमां शाटिकाम् उपहारस्वरूपेण गृह्णातु - इत्येवं विक्रेता न्यवेदयत्। उपहारस्वरूपां शाटिकामनङ्गीकृत्य शास्त्रिमहोदयो यथाशक्ति अल्पमूल्यां शाटिकामेव क्रीतवान्। **दिङ्मात्रमेतत्**। बहूनि रोचकवृत्तान्तानि समुपलभ्यन्ते शास्त्रिवर्याणां येनेदं प्रतिभाति यत्ते न्याय्यपथादविचलिताः सरलतायाः प्रतिमूर्त्तयो देशभक्ताः, कर्मठाः, प्रजावत्सलाश्चासन्।

तेषामुद्बोधनवाक्यानि आसन् -

(1) स्वतन्त्रतायाः संरक्षणस्योत्तरदायित्वं न केवलं सैन्यबलस्यैव, अपितु सम्पूर्णं राष्ट्रमेतदर्थं सन्नद्धं भवेदित्यावश्यकम्।

(2) वयं विश्वशान्तौ शान्तिपूर्णविकासे च विश्वसिमः।

(3) यथा दृढसंकल्पेन आक्रामकताया विरुद्धं युद्धं विहितं संग्रामे चैतिहासिकं जयमवाप्तुम्, तथैव विश्वशान्तिस्थापनार्थमपि दृढसंकल्पैरस्माभिर्भाव्यम्।

(4) राजनैतिकक्रियाकलापाः न केवलं सैद्धान्तिका भवेयुरथापि जनानामावश्यकतामाकलय्य व्यावहारिका भवेयुः।

(5) 'संस्कृत संस्कृतिश्चैव श्रेयसे समुपास्यताम्' इति ध्येयवाक्यं हृदि निधाय राष्ट्रोत्कर्षं सदा चिन्तयेत्। **दिङ्मात्रमेतद्** अवगन्तव्यम्।

शास्त्रिवर्याणां प्राथमिकताऽऽसीत् खाद्यान्नमूल्या-नामभिवृद्धौ निरोधः सैन्यबलानां कृते च पूर्णसमादरः। अतस्तैः प्रेरकवाक्यं प्रयुक्तम् '**जय जवान, जय किसान**' इति।

अतुलगुणशाली शास्त्रिमहोदयो भारतस्यादर्शभूतो दृढनेतृत्वप्रदाता स्वतन्त्रतासेनानी क्रियावान् प्रजानुरञ्जकः प्रधानमन्त्री यावज्जीवं स्वदेशस्य प्रजानाञ्च हितचिन्तन एव समग्रं जीवनम् अर्पिपत्। भारतसर्वकारस्य राजस्वविभागे लिपिकपदात् सेवामारभ्य न्याय्ये पथि समारूढः सन् विशालभारत-राष्ट्रस्य प्रधानमन्त्रिपदमलमकरोत्, अन्ते च राष्ट्रहिते प्राणान् तत्याज। 02/10/2022 दिनाङ्केऽस्माकं प्रधानमन्त्रिचरस्य संस्कृतविदुषः श्रीलालबहादुर-शास्त्रिणः **118 तम-जयन्त्यवसरे** हार्दान् श्रद्धाञ्जलीन् सादरं समर्पयामो वयम्।

**- सम्पादकः**

**आचार्योऽध्यक्षचरश्च, संस्कृतविभागः,**

**जयनारायणव्यासविश्वविद्यालयः,**

**जोधपुरम् ( राजस्थानम् )**

**दूरभाषाङ्कः 8386943655**

# श्रीलालबहादुरशास्त्रिणः नवाचाराः

❑ डॉ. नाथूलालसुमनः

श्रीलालबहादुरशास्त्रिणमहाभागाः **1904** तमे खिस्ताब्दे **अक्टूबरमासस्य द्वितीयदिनाङ्के** वाराणसी-समीपे **मुगलसराय**नगरे जनिं लब्धवन्तः। सार्धैकवर्षस्य वयसि एव पितृचरणाः दिवङ्गताः, अत एव एतेषां लालनं पालनं प्राथमिकशिक्षा च मातामहगृह एव सम्पन्ना। अनन्तरं शास्त्रिमहाभागः काशीविद्यापीठे अधीत्य '**शास्त्री**' इति उपाधिं प्राप्तवान्। उपाधिं संप्राप्य एव सः स्वनाम्ना सह संयुक्त 'श्रीवास्तव' इति जातिसूचकम् अभिधानं त्यक्त्वा 'शास्त्री' अभिधानं योजितवान्। तदनन्तरं सः लालबहादुरशास्त्री नाम्ना एव ख्यातः। महात्मागांधिमहाभागानां विचारैः प्रभावितः श्रीलालबहादुरशास्त्रिमहोदयः स्वविवाहे अपि यौतुक-रूपेण केवलं खादीवस्त्रमेव स्वीकृतवान्। भारतस्य स्वातन्त्र्यान्दोलने सक्रियरूपेण संयुक्त असौ आहत्य 9 वर्षाणि कारागारे यापितवान्। 1942 तमे खिस्ताब्दे 'अंग्रेजो भारत छोड़ो' इत्याख्ये आन्दोलने महात्मा गांधी 'करो या मरो' इति आह्वानं कृतवान्। शास्त्रिमहोदयस्तु प्रयागं संप्राप्य तत्र चातुर्येण गांधिन आह्वानं परिवर्त्य '**मरो नहीं मारो**' इति कृतवान्।

स्वातन्त्र्यान्दोलनकाले निर्धनदेशभक्तेभ्यः '**सर्वेण्ट्स ऑफ इण्डिया सोसायटी**' द्वारा प्रतिमासं 50 रूप्यकाणि जीविकानिमित्तं दीयन्ते स्म। कारागारे स्थितः शास्त्रिमहोदयः पत्रमाध्यमेन स्वपत्नीं पृष्टवान्। सा प्रत्युत्तरं लिखित्वा सूचितवती - 40 रूप्यकैः अस्माकम् आजीविका सुखेन चलति। तदानीं शास्त्रिमहोदयः सोसायटीं प्रति निवेदितवान्- मम परिवारनिमित्तं 40 रूप्यकाणि पर्याप्तानि। अवशिष्टम् अन्येभ्यः ददातु।

स्वातन्त्र्यानन्तरं शास्त्रिमहोदय उत्तरप्रदेशे '**पुलिस एवं परिवहन मन्त्री**' आसीत्। तदानीं परिवहनमन्त्रिरूपेण सर्वप्रथमम् असौ **महिला संवाहकानां** (कण्डक्टर इति) नियोजनं कृतवान्। पुलिसमन्त्रिरूपेण चाऽसौ सम्मर्द-नियन्त्रणार्थं दण्डप्रहारस्थाने **जलधाराप्रहारं** प्रारब्धवान्। 1956 तमे खिस्ताब्दे शास्त्रिमहोदयः '**रेलमन्त्री**' आसीत् तदानीं रेलयानदुर्घटना संजाता, असौ मन्त्रिपदमेव त्यक्तवान्।

शास्त्रिमहोदयस्य प्रधानमन्त्रित्वकाले एकदा तस्य पुत्रः श्री सुनीलशास्त्री रात्रौ राजकीयवाहनं स्वीकृत्य कुत्रापि गतवान्। यदा श्रीसुनीलशास्त्री गृहं प्राप्तवान् तदा शास्त्रिमहोदय उक्तवान्- राजकीयवाहनं देशस्य प्रधानमन्त्रिण उपयोगार्थं प्राप्तं पुत्रस्य उपयोगार्थं न, अतएव अग्रे राजकीयवाहनस्य उपयोगं मा करोतु। राजकीयवाहनं यावद् दूरं गतं तस्य भाटकमपि शास्त्रि-महोदयः राजकीयकोषे स्थापितवान्। एकदा एकस्यां गोष्ठ्यां गमनकाले यदा शास्त्रिमहोदयः **कञ्चुकं** (कुर्ता इति भाषायां) धृतवान् तदा तस्य पुत्री वदति- तात! कञ्चुकं शीर्णं, नूतनं स्वीकरोतु। शास्त्रिमहोदयः उक्तवान्- अहं तु उपरि **प्रावारं** (कोट इति भाषायां) धरिष्यामि, एवम् एतत् कञ्चुकं कानिचन दिनानि इतोऽपि चलिष्यति। मम देशस्य अनेके जनास्तु वस्त्रहीना एव सन्ति तर्हि अहं नूतनं वस्त्रं कथं क्रेतुं शक्नोमि।

1965 तमे खिस्ताब्दे पाकिस्तानेन आक्रमणं कृतं, राष्ट्रपतिना एका गोष्ठी आहूता। गोष्ठ्यां सेनानायका उक्तवन्तः- महोदय! आज्ञापयतु किं कुर्म इति। शास्त्रिमहोदय उक्तवान्- भवन्तः देशरक्षां कुर्वन्तु वदन्तु च अस्माभिः किं करणीयम्। अनन्तरं शास्त्रिमहोदयः सीमोल्लंघनस्यापि आज्ञां दत्तवान्। सेनानायकाः पाकिस्तानस्य प्रदेशान् विजित्य लाहौरसमीपं प्राप्तवन्तः। तदानीम् **अमेरिका**देशः भारतं दमयितुं युद्धविरामार्थं तर्जितवान्- यदि भारतदेशः युद्धात् न विरमति तर्हि वयं खाद्यान्नस्य गोधूमस्य आपूर्तिं स्थगयामः। अमेरिका देशस्य प्रतिकाररूपेण **विजयदशम्या** अवसरे देहल्यां रामलीलाप्राङ्गणे शास्त्रिमहोदयः स्वकीयभाषणे साप्ताहिकोपवासस्य आह्वानं कृतवान्, स्वयमपि उपवासस्य सङ्कल्पं कृतवान् च। अत्रैव शास्त्रिमहोदयः **'जयतु सैनिकः जयतु कृषकः'** (जय जवान जय किसान) इति उद्घोषं कृतवान्। शास्त्रिमहोदयेन दुग्धोत्पादनवृद्धिनिमित्तं **श्वेतक्रान्तिः** खाद्यान्नोत्पादन-वृद्धिनिमित्तं **हरितक्रान्तिश्च** प्रोत्साहिता।

युद्धविरामार्थं प्रयासरतौ अमेरिका-रूसदेशौ वार्तानिमित्तं शास्त्रिमहोदयं **ताशकन्द**नगरे आहूतवन्तौ। 1966 तमे खिस्ताब्दे जनवरीमासस्य **दशमे** दिनाङ्के ताशकन्दनगरे वार्तायां शास्त्रिमहोदय **अन्यसमयान्** (शर्तें इति भाषायां) तु स्वीकृतवान् किन्तु पाकिस्तानस्य विजितप्रदेशान् समर्पयितुं नाङ्गीकृतवान्। अन्ते च विमनस्कः शास्त्रिमहोदयः सन्धिपत्रे हस्ताङ्कनं तु कृतवान् किन्तु तेन उक्तमपि यत् विजितप्रदेशान् अहं तु न समर्पयिष्यामि कोऽपि अन्यः प्रधानमन्त्री एव समर्पयिष्यति। तस्यामेव रात्रौ ताशकन्दनगरे एव शास्त्रिमहोदयः दिवङ्गतः।

प्रकटरूपेण तु उक्तं यत् शास्त्रिमहोदयस्य मृत्युः हृदयाघातेन जाता किन्तु अनेके जनाः वदन्ति विषं प्रदाय शास्त्रिमहोदयः मारितः। शास्त्रिमहोदयस्य मृत्यु अधुनाऽपि रहस्यमेव। 'CIA's Eye on South Asia' इति पुस्तकस्य लेखकः **अनुजधरः** 'सूचनाया अधिकारः' (सूचना का अधिकार - Right to Information) इति माध्यमेन 2009 तमे खिस्ताब्दे प्रधानमन्त्रिकार्यालयतः एवं सूचनां प्राप्तवान् - 'शास्त्रिमहोदयस्य मृत्युपत्रावल्याः सार्वजनीकरणेन अस्माकं देशस्य अन्ताराष्ट्रियसम्बन्धेषु दोषा आगन्तुं शक्नुवन्ति। अथ च अस्मात् रहस्यात् यवनिकापाकरणेन देशे उत्पाताः भवितुं शक्नुवन्ति, संसदीयविशेषाधिकारेषु दुष्प्रभावश्च भवितुं शक्नोति।' शास्त्रिमहोदयस्य मृत्युसाक्षी तस्य निजी चिकित्सकः **आर.एन. चुग** महोदय अपरश्च वैयक्तिकसहायकः **श्रीरामनाथः** द्वौ अपि मार्गदुर्घटनायां संदिग्धस्थितौ मरणं प्राप्तवन्तौ।

शास्त्रिमहोदयस्य समाधिस्थलं यमुनातटे देहल्यां **'विजयघाट'** नाम्ना निर्मितम्। मरणोपरान्तं भारतसर्वकारेण **1966** तमे खिस्ताब्दे शास्त्रिमहोदयाय **'भारत रत्न'** इति सम्मानं प्रदत्तम्। अस्माकं कृतेऽपि गर्वस्य विषयोऽयं यत् संस्कृत-छात्रस्य अद्वितीयनेतृत्व-सामर्थ्यं, सामान्यजीवनं, देशभक्तिं, सत्यनिष्ठां च संस्मृत्य देशवासिनः सदैव तं प्रति श्रद्धावनता आसन् सन्ति भविष्यन्त्यपि।

(स्रोतः- अन्तर्जालम्)

**- उपाध्यक्षः**
**भारतीयसंस्कृतप्रचारसंस्थानस्य, जयपुरम्**

# सुगुरवोऽनन्तादिरामोत्तराः

❑ **प्रो. ताराशंकरशर्मा पाण्डेयः**

**नानाशास्त्रविभूषणाः सुमनसो ब्रह्मैकनिष्ठाग्रजाः**
**पूतानन्तहृदः पुराणपुरुषा वेदार्थपारङ्गमाः।**
**वेदत्वं हि पुराणमूलनिकरं तर्कैश्च यैः साधितं**
**विष्णोर्धाम प्रयान्ति सारितपदा**
**भूयो यशोऽम्भोधयः।।1।।**

भाषार्थ- अनेक शास्त्रों से विभूषित, एकमात्र ब्रह्मनिष्ठों में अग्रणी, वेदों के पारंगत और जिन्होंने अनेक तार्किक प्रमाणों से वेदों का मूल पुराण को सिद्ध करने के लिए **'पुराण एक समग्र दृष्टि : पुराणों का वेदत्व'** नामक ग्रन्थ लिखा है अतः पुराणों के विशेषज्ञ होने से पुराणपुरुष कहे जाने वाले, अत्यधिक यश के सागर, पवित्रहृदय पण्डित श्री **अनन्त शर्मा** विष्णुधाम की ओर पांव बढ़ाते हुए जा रहे हैं।

**भाद्रेऽनन्तचतुर्दशीतिथियुते ख्याते च मन्दे दिने**
**सप्ताष्टग्रहभूमियुक्तनवले संवत्सरे वैक्रमे।**
**नश्रीवादजनुः स रामगढ़भूः श्रीमंगलीकुक्षिगो**
**जातः श्रीहनुमत्प्रसादविदुषो**
**योऽनन्तशर्मा सुधीः।।2।।**

भाषार्थ- पं. अनन्त शर्मा भाद्रपद महीने में **अनन्त चतुर्दशी** को शनिवार के दिन विक्रम संवत् 1987 में पं.श्री **हनुमान् प्रसाद** जी शर्मा एवं श्रीमती **मंगली** देवी से **नश्रीवाद**=नसीराबाद, अजमेर (राज.) में जन्मे तथा वे दांता रामगढ़ के मूल निवासी थे।

**चत्वारस्तनयाः सुतीक्ष्णमतयो धर्मार्थकामादिवत्**
**प्राज्ञानन्तप्रियाष्टसिद्धिप्रमिता दौहित्रपौत्रादिकाः।।**
**पत्नी श्रीललिता पतिव्रतचरी यज्ञादिसंयोगदा**
**तत्सौगन्ध्यलवंगिका सुतनया-**
**ऽनन्तस्य तस्य प्रिया।।3।।**

भाषार्थ- पं. अनन्त शर्मा जी और यज्ञादि धार्मिक कार्यों में सहयोग करने वाली, पतिव्रता पत्नी श्रीमती **ललिता** के अत्यधिक मेधावी तथा धर्म, अर्थ, काम एवं मोक्ष के समान चार प्रिय पुत्र तथा लता की सुगन्ध धारण करने वाली **लवंगिका** नामक पुत्री हुई। इसके साथ ही आठ सिद्धियों के समान आठ दौहित्र पौत्र पौत्रियां हुए।

**भाषासंस्कृतसेवनेऽतिरुचयो ज्ञानार्थविद्याप्रदाः**
**छात्रोद्बोधपरायणेषु प्रमुखा रात्रिन्दिवं संयुताः।**
**श्रीरामायणचिन्तनैकरसिकाः प्राज्ञा महाभारते**
**नित्यं लेखनतत्पराः सुगुरवो-**
**ऽनन्तादिरामोत्तराः।।4।।**

भाषार्थ- सद्गुरु पं. श्री अनन्तराम शर्मा हिन्दी भाषा और संस्कृत की सेवा में अत्यधिक रुचि रखने वाले,ज्ञान के लिए विद्यादानी तथा रात दिन छात्रों को प्रेरित करने वालों में प्रमुख रहे। वे श्री रामायण का हमेशा चिन्तन करने वाले रसिक एवं महाभारत के प्रौढ विद्वान् रहे। इन्होंने **'महाभारत दर्शन समग्र दृष्टि'** नामक ग्रन्थ लिखा।

**वेदश्रीमधुसूदनज्ञरचिता ग्रन्था अनेके श्रुताः**
**तद्विश्लेषणटिप्पणीविलिखनेऽनन्ताः प्रबुद्धा मताः।**
**संख्यानामतदङ्कमर्मविषये ख्यातिङ्गतं पुस्तकं**
**तेऽनन्ता अभवन् यशोऽतिधवलाः**
**सारस्वतीमूर्तयः।।5।।**

भाषार्थ- वेदविभूति पं. श्री मधुसूदन ओझा द्वारा रचित व्योमवाद, अम्भोवाद आदि अनेक वैदिक विज्ञान के ग्रन्थ हैं, उनकी विश्लेषणात्मक टिप्पणी सहित अनुवाद आदि लिखने में पं. श्री अनन्त शर्मा जी दक्ष माने जाते हैं, इनके द्वारा '**भारतीय संख्या नामों तथा अंकों की विश्वविभूति**' आदि ग्रन्थ लिखे जो अति प्रसिद्ध हुए। ऐसे सरस्वती-मूर्ति पं.अनन्त शर्मा अत्यन्त यशस्वी हुए।

**श्रीमद्भागवतीयचिन्तनपरैः पीयूषपूरैश्च यैः**
**पूता वायुपुराणसिद्धसुधया राजस्थली-पत्रिका।**
**तत्तेषामधमर्णसंस्कृतजगच्छब्दप्रसूनाञ्जलिं**
**स्वात्मानं मनुते समर्प्य**
**कृतिनं तारास्पदः शंकरः।।6।।**

भाषार्थ- पं. अनन्त शर्मा जी ने राजस्थान पत्रिका में निरन्तर लगभग दस वर्षों तक प्रकाशित श्रीमद् भागवत तथा वायुपुराण का चिन्तन कर '**भागवतपीयूष**' तथा '**वायुपुराणपीयूष**' का लेखन कर पत्रिका का उपकार किया। इस प्रकार उनका ऋणी संस्कृत जगत् एवं ताराशंकर शर्मा पाण्डेय उनको शब्द-प्रसूनाञ्जलि समर्पित कर अपने आप को कृतज्ञ मानता है।

इति जयपुरवास्तव्येन राष्ट्रपतिसम्मानित-प्रतिनवबाणभट्ट- पण्डित- श्रीमोहनलालशर्मपाण्डेयात्मजेन श्रीकल्लाजीवैदिक-विश्वविद्यालय- कुलपतिना प्रोफेसर(डॉ.) ताराशंकरशर्मपाण्डेयेन प्रणीतं 'सुगुरवोऽनन्तादिरामोत्तराः' श्रद्धाञ्लिकाव्यं सम्पूर्णम्।

**- 2381, पाण्डेय भवन, खजाने वालों का रास्ता,**
**जयपुर (राज.)302001**
**मो. 9829271351**

# पुराणविद्यायाः सूर्योऽस्तंगतः



**पण्डित अनन्तशर्मा**

जयपुरस्थ-जगद्गुरु-रामानन्दाचार्य-राजस्थान-संस्कृत-विश्वविद्यालयस्य '**महात्मा रामचन्द्रवीर धर्म संस्कृति**' **पीठस्य**, '**भट्ट-मथुरानाथशास्त्रि-साहित्य**' पीठस्य च अध्यक्षचराः, '**पुराणों का वेदत्व**' '**महाभारत-दर्शन समग्रदृष्टि**' '**भारतीय संख्यानामों तथा अङ्कों की विश्वयात्रा**' इत्याद्यनेकग्रन्थरचयितारः **पण्डित-अनन्तशर्माणः** १५.०९.२०२२ दिनाङ्के गुरुवासरे रात्रौ १२.५५ वादने जयपत्तने दिवं प्रयाताः ।अनेन संस्कृत-जगद् महति शोके निमग्नम्।'**भारती**' मास-पत्रिकापरिवारोऽस्मिन्नवसरेऽस्मै '**पुराण**' पुरुषाय हार्दिकान् श्रद्धाञ्जलीन् अर्पयति।

**- सम्पादकः**

# तव कथामृतम्

❑ आचार्यः पं. नथमलशास्त्री दाधीचः

क्रमागतम् -

**ज्ञानी परमहंसः श्री-ऋषभःपुरुषर्षभः।**
**भक्तिज्ञानविरागाप्त्यै स्तूयते साधकैः सदा॥**

श्रीमद्भागवतमहापुराणमष्टादशसाहस्री पारमहंसीसंहिता कथ्यते। पुरुषर्षभो भगवान् ऋषभदेवो ज्ञानी परमहंसोऽत्र संकीर्त्यते। अथ त्रेतायामस्मद्देशोऽयमार्यावर्त- ब्रह्मावर्ताजनाभखण्डेति नामभिरभिधीयते स्म। तदानीमाग्नीध्रपुत्रो राजर्षिर्नाभिः प्रजावत्सलश्चक्रवर्ती सम्राट् सकलभूमण्डलं शशास। स्वधर्मनिष्ठः शुद्धसत्त्वस्वरूपो ब्रह्मण्यो राजर्षिस्तपोधनैर्ब्रह्मवादिभिर्वेदविद्भिः परमार्थिभिरनुज्ञातो भक्त्यानुभावितो यज्ञनिष्ठः सश्रद्धः सहधर्मिण्या **मेरुदेव्या** सहापत्यकामो भगवन्तं यज्ञपुरुषं यज्ञेनायजत, षड्गुणैश्वर्यसम्पन्नं भगवत्तुल्यं विभूतिमन्तं सुतञ्चायाचत।

**को नु तत्कर्म राजर्षेर्नाभेरन्वाचरेत्पुमान्।**
**अपत्यतामगाद् यस्य हरिः शुद्धेन कर्मणा॥**
**ब्रह्मण्योऽन्यः कुतो नाभेर्विप्रा मङ्गलपूजिताः।**
**यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा॥**

(भा. ५/४/६-७)

धन्यातिधन्योऽयं राजर्षिर्नाभिर्यस्य यज्ञे मङ्गलपूजितास्तपस्विन ऋत्विजो वेदपारगाः परमर्षयो याज्ञिकाः सद्विप्राः स्वकीयेनैवौजसा यज्ञपुरुषं भगवन्तं श्रीमन्नारायणं सपत्नीकाय यजमानाय राजर्षये प्रत्यक्षं दर्शयामासुरिति। गोभूहिरण्यधनधान्यवस्त्रादिदानदक्षिणाभिः समृद्धेनानेन विशुद्धेन यज्ञकर्मणा सुप्रीतः स्वयं हरिरस्य राजर्षेरपत्यतामगात्।

एवं परमर्षिभिः प्रसादितो यज्ञपुरुषो भगवान् श्रमणानां वातारशनानां धर्मान् दर्शयितुकामो मेरुदेव्यामवततार।

श्रीमद्भागवतोक्तचतुर्विंशत्यवतारेषु भगवतोऽयमष्टमो ऋषभावतारो प्रगीयते। राजा नाभिरुत्तमश्लोकेनौजसा बलेन श्रिया यशसा वीर्यशौर्याभ्याञ्च भगवल्लक्षणसंयुतं स्वसुतं **ऋषभं** शैशवे वत्स! तातेति सानुरागमुपलालयन् परां निर्वृतिमुपगतः।

ततश्च यौवनमुपगतस्यात्मजस्य प्रजावत्सलतां सर्वलोकप्रियतां दुष्टदमनसुजनसंरक्षणकौशलं सामर्थ्यञ्च समीक्ष्य प्रजापालनाय ऋषभं राजसिंहासनेऽभिषिच्य ब्राह्मणेषूपनिधाय च भक्तिज्ञानविरक्तिभावैः परिभावितान्तःकरणस्तपस्तप्तुं पत्न्या मेरुदेव्या सह वनं प्रवव्राज। तत्र च विशालायां (बदरिकाश्रमे) परमेण तपसा समाधियोगेन नरनारायणाख्यं भगवन्तं वासुदेवमुपासीनः सर्वसङ्गविनिर्मुक्तः सर्वभूतात्मभूतात्मा सुदुर्लभां परमां भागवतीं गतिमवाप।

ततश्चैकदाऽजनाभखण्डस्वामिनो राजर्षेः पुरुषर्षभस्य ऋषभस्यानन्तश्रीधर्मयशःशौर्यवीर्यैश्वर्यादिभगवदीयगुणान् विलोक्य परोत्कर्षासहिष्णुरीर्ष्यान्वितः स्पर्धमानो देवेन्द्रस्तद्वर्षे (अजनाभखण्डे) न ववर्ष। तदवधार्य योगेश्वरो भगवान् ऋषभदेवः प्रहस्य

स्वयोगमायया ऽजनाभखण्डं विपुलमवर्षत्। तद्विलोक्य सविस्मयः सुप्रसन्नश्च राज्ञो योगमायानुभावेनाभिभूतः स्वर्गाधिपो देवेन्द्रो **जयन्ती**नाम्नीं स्वकन्यां प्रणयविधिना तस्मै प्रददौ।

ततश्च राजर्षिः स्ववर्षं कर्मक्षेत्रमनुमन्यमानो गुरुकुलशिक्षामधिगत्य लब्धवरैर्गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो यथासमयमिन्द्रदत्तायां जयन्त्यामात्मसमानानामात्मजानां **शतं** जनयामास।

**येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुणश्चासीद्येनेदं वर्षं भारतमिति व्यपदिशन्ति।** (भा. ५/४/९)

तमनु कुशावर्त- इलावर्त- ब्रह्मावर्तादयो नव नवतीनां ज्येष्ठाश्चासन्।

ततश्च-

**कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः।**
**आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः।।**

एते नव राजकुमारास्तु भागवतधर्मदर्शना महाभागवतास्तेजस्विनः सिद्धपुरुषाः सञ्जाताः। अन्ये चैकाशीतिर्जयन्ती-नन्दनाः पितुरादेशानुगा महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणाः बभूवुरिति (भा. ५/४/१०-११)

केवलानुभवानन्दस्वरूपः परमकारुणिकः साक्षादीश्वरो ऋषभदेवो बहुभिर्विविधविधियज्ञैर्यज्ञ-पुरुषमाराध्य ब्राह्मणप्रदर्शितमार्गेण सामदामादिभिः प्रजाः पालयामास। एकदा प्रजावत्सलो भगवान् ऋषभदेवो ब्रह्मावर्ते समायोजितायां ब्रह्मर्षिसभाया-मुपस्थाय प्रश्रयपरिणयादिगुणगणसंयुतान् समाहितान् स्वपुत्रान् प्रजाश्चैवमुपदिदेश-

**नायं देहो देहभाजां नृलोके**
**कष्टान् कामानर्हते विड्भुजां ये।**
**तपो दिव्यं पुत्रका येन सत्त्वं**
**शुद्ध्येद्यस्माद् ब्रह्मसौख्यं त्वनन्तम्।**

(भा. ५/५/१)

हे पुत्रकाः! नृलोकेऽस्मिन्नृदेहः केवलमैन्द्रिय-विषयभोगावाप्तय एव नास्ति। दुःखप्रदानिन्द्रियजन्य-भोगांस्तु विष्ठाभोजिनः कूकरसूकरादयोऽपि भुञ्जते। सुरदुर्लभेनानेन देहेन तु दिव्यं तपस्तप्त्वा स्वान्तः-करणविशुद्धिर्विधेया। ततश्च नरोऽनन्तं ब्रह्मसौख्यं लभते। एवञ्च शास्त्रेषु महत्सेवामेव मुक्तिद्वारमुक्तम्, स्त्रीसङ्गिनां कामातुराणां जनानां सङ्गास्तु नरकद्वारमेवास्ति। अतो हि ये समचित्ताः परमशान्ताः जितकामक्रोधाः सुहृदः साधवः सन्ति, त एव महापुरुषाः सावधानतया विनयान्वितैर्जिज्ञासुभिः संसेवनीयाः। द्रष्टव्योऽत्रायं श्लोकः सत्सङ्ग-सिद्धिकामैरिति-

**महत्सेवां द्वारमाहुर्विमुक्ते-**
**स्तमोद्वारं योषितां सङ्गिसङ्गम्।**
**महान्तस्ते समचित्ताः प्रशान्ता**
**विमन्यवः सुहृदः साधवो ये।।**

(भा.५/५/२)

नूनं कामग्रहग्रस्तः प्रमत्तो जनः कुकर्मणि प्रवृत्तो भवति। वृत्तिरियमिन्द्रियतृप्त्यर्थमेव जायतेऽन्ततो

विषयेन्द्रियसंयोगो दुःखदो हि भवति। अहमेतत्समीचीनं हितकरञ्च न मन्ये। अनेनैव हेतुनाऽयमात्मा दुःखास्पदमिदं नश्वरशरीरं (गर्भवासे महद्दुःखम्) पुनः पुनः समधिगच्छति। यावज्जीवोऽ-यमात्मतत्त्वस्य जिज्ञासां स्वान्तःकरणे न विदधाति तावत्तु देहेन्द्रियैरावृत्तो निजात्मस्वरूपं कथं ज्ञास्यतीति विचारणीयम्। एवमविद्या-माया-समावृत्तस्य जीवस्य स्वकर्मवासनाभिर्देहबन्धो हि क्लेशप्रदो जायते। अस्य च भक्तिरसास्वादनायात्र श्लोकः प्रस्तूयते -

**नूनं प्रमत्तःकुरुते विकर्म**
**यदिन्द्रियप्रीतय आपृणोति।**
**न साधु मन्ये यत आत्मनोऽय-**
**मसन्नपि क्लेशद आस देहः:** ।। (भा. ५/५/४)

**- पूर्वप्राध्यापकः**
**छापर ( चूरू )**
**मो. 9351226660**

---

# श्रीनारायणशतकस्याद्याः षट् श्लोकाः

❑ पण्डित अमरदत्तशर्मा

( १ )

**यत् सर्वत्र यतो हि सर्वजननं, सर्वस्वरूपञ्च यत्**
**न ग्राह्यं निखिलेन्द्रियैरविचलं, यत् संचरत् सर्वदा।**
**निर्दिष्टं बहुनामभिर्यदपरं केनापि नाम्ना न यत्**
**यद् ब्रह्माखिललोकचेतसि गतं तत् त्वं हि नारायण।।**

( २ )

**केचिद् ब्रह्मविरंचिमच्युतशिवौ केचिद् विधुं भास्करम्**
**केचिद् वैश्रवणं जलेश्वरगुहौ केचिच्च द्वैमातुरम्।**
**केचिद् वासवमग्निमन्तमनिलं केचिज्जना भैरवम्**
**नानाख्यैः सकलाः स्मरन्ति हृदयं स त्वं हि नारायण।।**

( ३ )

**श्रीमद्-व्यापकता यथास्ति सगुणे सा वर्तते निर्गुणे**
**साकारेऽपि तथास्तिरूपरहिते व्याप्तं समग्रं त्वया।**
**उन्मेषाज्जगदुद्भवश्च भवति त्वन्निर्निमेषाल्लयः**
**सल्लक्ष्योऽसि विलक्षणोऽसि भगवन् निर्बन्ध नारायण।।**

( ४ )

**स्रष्टा त्वं हि चराचरात्मजगतः तत्पालकः पुष्टिकृत्**
**सर्वं कर्तुमकर्तुमन्यकरणे शक्तः षडैश्वर्यकान्।**
**सर्वत्रासि तथापि भक्तविपदि त्वं चैकदेशे स्थितः**
**अव्यक्तोऽप्यसि साधकाय महते व्यक्तोऽसि नारायण।।**

( ५ )

**साकारं सगुणं चतुर्भुजवपुः, ध्यायन्ति भक्ता जनाः**
**इत्थं भावदृशासि देव! सगुणः, त्वं चर्चया निर्गुणः।**
**सद्भ्यो यच्छसि सत्पुमर्थनिवहं यत्तेऽस्ति चित्ताश्रयः**
**साधून् रक्षितुमाव्रजन्ति वसुधां सर्वेऽवतारास्तव।।**

( ६ )

**हे विष्णो! मनसा करोषि करुणां जीवेषु चाहैतुकीम्**
**संयुक्तोऽसि दयालुतादिसुगुणैस्त्वं मूर्तिमान् सद्गुणः।**
**देवैरर्चितपादपद्मशरणात् सन्मंगलं जायते**
**वात्सल्याम्बुधिरेव तेऽब्धिहृदयं कल्लोलितो वर्तते।।**

( पण्डित-अमरदत्तशर्मणा विरचितमिदं पद्यषट्कम् )

- पचेवर ( टोंक )
मो. 9460593822

# रम्या रामायणी कथा

❑ प्रो. डॉ. योगिनी हिमांशु व्यासः

मधुमयभणितीनां मार्गदर्शी महर्षिः वाल्मीकिः आदिकविः अस्ति। यथार्थमेवमुक्तम् अस्य कविपुङ्गवस्य विषये यत् -

**कूजन्तं रामरामेति**
**मधुरं मधुराक्षरम्।**
**आरुह्य कविता-शाखां**
**वन्दे वाल्मीकि-कोकिलम्।।**

यः रामायणीकथां शृणोति, सः पापमुक्तः भवति। यथा -

**आदिकाव्यम् इदमार्षं पुरा वाल्मीकिना कृतम्।**
**यं शृणोति यदा लोके नरः पापात् प्रमुच्यते।**

वेदेषु, ब्राह्मणग्रन्थेषु, उपनिषत्साहित्ये, सूत्रसाहित्ये, बौद्धसाहित्ये, पुराणेषु च रामकथायाः उल्लेखाः प्राप्यन्ते। आदिकवेः अमरसर्जनं 'रामायणम्' भारतीयसंस्कृतेः आधारस्तम्भः अस्ति। रामायण-कथयैव भारतीयप्रजानां निर्माणं विहितम्। आसु प्रजासु आचारविचार-जीवनपद्धति-संस्काराणां च सेचनं भूतम्। अत एव रामायणम् अस्मत्संस्कृतेः कबीरवृक्षः, विचाराणां पावनी गङ्गा, आदर्शानां हिमालयः, भावनानां च उत्तुङ्गं विशालं च गगनम् अस्ति। यदि भारतीयसंस्कृते रामायणम् अपसारितं स्यात्तर्हि अस्मत्संस्कृतेः आधारशिलैव नष्टा अन्तर्हिता वा स्यात्। रामायणं भगवतः श्रीरामस्य कथा अस्ति, किन्तु इदं कस्यचन राज्ञो नृपस्य वा प्रशंसा नास्ति, किन्तु मर्यादापुरुषोत्तमस्य रामस्य तद्द्वारा आर्याणां जीवनस्य, भव्यादर्शपरम्परायाश्च कथा संगुम्फिता अस्ति। भारतीय गृहस्थजीवनस्य सुविस्तृतं चित्रणम् अत्र कृतमस्ति। आदर्शपितॄणाम्, आदर्शपुत्राणाम्, आदर्शपतीनाम्, आदर्शपत्नीनाम्, आदर्शनृपाणाम्, आदर्शसेवकानाम्, आदर्शमित्राणाम् अनुपमं हृदयावर्जकम् उत्कृष्टं च निरूपणम् आदिकविना श्रेष्ठतया हृदयङ्गमतया च कृतमस्ति। साम्प्रतकालेऽपि कोऽपि भारतीयजनः 'रामराज्यम्' इति शब्दोच्चारणं कृत्वा श्रीरामं नृपस्य आदर्शं मन्यते। तद्यथा -

**श्रीमत्स्वस्त्ययनं समस्तधरणी -**
**कल्याण-रत्नाकरम्।**
**ध्येयं ध्वस्तरजस्तमस्कमनिशं**
**वाल्मीकिनिर्देशितम्।।**
**यच्चैवं वसुधाकुटुम्बकमिति प्रज्ञां प्रसोसूयते।**
**भूयाद् भारतवर्षगौरवमतः श्रीरामराज्यं पुनः।।**

रामस्य गुणसमृद्धिं वर्णयन् वाल्मीकिः कथयति - रामः कल्याणाभिजनः, साधुः, अदीनः, सत्यवाक्, ऋजुः, शास्त्रज्ञः, कृतज्ञः, श्रेष्ठः, अनसूयः, जितक्रोधः, बुद्ध्या बृहस्पतेः वीर्येण च शचीपतेः तुल्यः अस्ति। (अयोध्याकाण्ड-१/१८-२६)

रामवनवासप्रसङ्गः रामायणस्य करुणतमः वृत्तान्तः अस्ति। कविना अत्र रामप्रस्थानदृश्यं दशरथस्य वेदना च नैसर्गिकतया प्रदर्शिता। पाषाणहृदयमनुष्यः अपि अवश्यम् अस्मिन् प्रसङ्गे बाष्पपर्याकुलेक्षणो भवेत् तर्हि का कथा संवेदनशील-स्वभावानाम् अयोध्यावासिनाम्!!! सन्देशवाहकस्य कथनात् रामः कैकेयीसमीपं गच्छति कथयति च-

**अहं हि वचनाद्राज्ञः पतेयमपि पावके।**
**भक्षयेयं विषं तीक्ष्णं मज्जेयमपि चार्णवे।।**

**नियुक्तो गुरुणा पित्रा नृपेण च हितेन च**
**तद् ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम्**
**करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते।।**

रामा.-२/१६/१८,१९

रामस्य हृदि प्रजाजनानां हिताय, क्षेमाय, कल्याणाय, श्रेयसे च चिन्ता वर्तते। अयोध्यावासिनः सत्यं कथयन्ति -

**न हि तद् भविता राष्ट्रं यत्र रामो न भूपतिः।**
**तद् वनं भविता राष्ट्रं यत्र रामो निवत्स्यति।।**

अयोध्याकाण्डः- ३१/२९

रामरावणयोर्युद्धे यदा रावणस्य मृत्युः भवति, तदा अन्त्येष्टिक्रियाप्रसङ्गे विभीषणः तस्य उपेक्षां करोति। अस्मिन् प्रसङ्गे रामस्य उद्गाराः वचनानि वा तस्य हृदयविशालतां दर्शयन्ति। यथा -

**मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम्।**
**क्रियतामस्य संस्कारो ममाप्येष यथा तव।।**

युद्धकाण्डः - १०९/२५

भारतीयसमाजः 'पुण्यश्लोका च वैदेही' इति सूक्त्यनुसारं जनकसुताम् अन्तःकरणपूर्वकं परमश्रद्धया च पूजयति। 'रामं विना क्षणमपि नहि जीवामि भूतले' इत्यनेन वाक्येन रामसीतयोः अद्वैतदाम्पत्यस्य दर्शनं भवति। पतितपावन्याः भागीरथ्याः मूर्तस्वरूपा सीता विश्वसाहित्यस्य नारीपात्रेषु मूर्धन्यस्थाने राराजते। सुन्दरकाण्डस्य सुन्दरतमं व्यक्तित्वम् अंजनिपुत्रस्य वायुपुत्रस्य हनुमतः अस्ति। सीतान्वेषणप्रसङ्गे सः उत्साहं न त्यजति। सः चिन्तयति -

**अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम्।**
**भूयस्तावद् विचेष्यामि न यत्र विचयः कृतः।।**

सुन्दरकाण्डः - १०/१०

लङ्काधिपतिर्दशग्रीवः रावणः ब्रह्मणः मानसपुत्रस्य पुलस्त्यस्य वैश्रवणमहर्षेः पुत्रः अस्ति। सुन्दरकाण्डे हनुमतः उद्गाराः तस्य व्यक्तित्वं दर्शयन्ति। यथा -

**अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः।**
**अहो राक्षसराजस्य सर्वलक्षणयुक्तता।।**

सुन्दरकाण्डः - ४९/१९

रामस्य अनुजभ्रातुः लक्ष्मणस्य चरित्रमपि चिरस्मरणीयमस्ति। यदा रावणः सीताम् अपहरति, तदा तया विसृष्टान् आभूषणाान् दर्शयित्वा रामः लक्ष्मणं पृच्छति। लक्ष्मणस्य उत्तरं नूनं संवेदनापूर्णम् अस्ति। यथा -

**नाहं जानामि केयूरे नाहं जानामि कुण्डले।**
**नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात्।।**

किष्किन्धाकाण्डः - ६/२२

रामचरितमाध्यमेन वाल्मीकिना सत्यपालनस्य महिमा प्रदर्शितः। सत्यपालनद्वारा रामः अपूर्वाम् अद्वितीयाञ्च विजयं प्राप्नोति। पार्थिवरामः वा मनुष्यरामः भगवतः रामस्य रूपेण लोकहृदयेषु शाश्वतं स्थानं प्राप्नोति।

**कवीन्द्रं नौमि वाल्मीकिं यस्य रामायणीकथाम्।**
**चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः।।**

**- प्लॉट नं. १४३५/सी १, सेक्टर - २बी,**
**गांधीनगर, गुजरात**

# समागतः स्वतन्त्रताया अमृतोत्सवः शुभः

(गीतम्)

❑ डॉ. प्रीतिः पुजारा

स्वाधीनतासंस्मारको देशप्रेमपोषको
गौरवेण मण्डयन् वसुन्धरासुसुन्दरीम्।
प्रबोधयन् मनांसि नो विलक्षणोऽयं सखि!
समागतः स्वतन्त्रताया अमृतोत्सवः शुभः।।१।।

भारतेन सेव्यते या दुर्लभा स्वतन्त्रता
कोटि-कोटिवीररक्तचर्चिता विभाव्यते।
बलिदानचण्डपावकं ज्वालयन् जनगणे
समागतः स्वतन्त्रताया अमृतोत्सवः शुभः।।२।।

पारतन्त्र्यबन्धनादुन्मोचिता वसुन्धरा
निधाय वक्षसि सहस्रका भुशुण्डीगोलिकाः।
मुक्तिपावकस्य वीरतर्पणं प्ररूपयन्
समागतः स्वतन्त्रताया अमृतोत्सवः शुभः।।३।।

वन्दे मातरं वदद्भिर्यैर्वीरैर्हवीकृतं
स्वतन्त्रतामखे स्वजीवनं पतङ्गवत् मुदा।
श्रद्धाञ्जलिं समर्पयन् तेभ्यो दृप्तसिंहेभ्यः
समागतः स्वतन्त्रताया अमृतोत्सवः शुभः।।४।।

स्वरक्तकर्दमाप्लुता महाधना स्वतन्त्रता
प्रदत्ता वीरपुङ्गवैः समस्ततापनाशिनी
सा कीदृशी स्वतन्त्रता निशम्यतां भणाम्यहं
समागते स्वतन्त्रताया अमृतोत्सवे शुभे।।५।।

लेखने स्वतन्त्रता चिन्तने स्वतन्त्रता
जातिधर्मसंप्रदायपालने स्वतन्त्रता।
वर्तने वाग्विलासे स्वतन्त्रता सदा
न हस्तक्षेपो भारते स्वतन्त्रताऽधिकारेषु।।६।।

मन्दिरे मस्जिदे गुरुद्वारकेऽथवा भूमौ
अभीष्टदेवशंसनाय स्वतन्त्राः प्रजाजनाः।
स्त्रीस्वतन्त्रतां पुनः संस्मारयन् पदे पदे
समागतः स्वतन्त्रताया अमृतोत्सवः शुभः।।७।।

निरपेक्षलोकतन्त्रशोभिता वसुन्धरा मम
अखण्डितं मे भारतं विविधतायामपि।
समस्तं श्रेयो दीयते स्वाधीनताहुतात्मभ्यः
समागतः स्वतन्त्रताया अमृतोत्सवः शुभः।।८।।

भयंकरं हालाहलं निपीय रणशूरैः स्वयं
संस्राविता स्वतन्त्रतानिर्झरी महीतले।
बलिदानक्रान्तिसिंहवीरभीमनादगर्जनै-
रनुनादिताऽधुनापि मे वसुन्धराधूलिकणाः।।९।।

वैष्णवी-शाम्भवी-शारदी स्वतन्त्रता
दधती राष्ट्रगौरवं हृदि हृदि संभ्राजताम्।
स्वाधीनतासुधाकरो भासताम् मे भारते
समागतः स्वतन्त्रताया अमृतोत्सवः शुभः।।१०।।

**- डॉ. प्रीति आर. पुजारा**
**सहायकाचार्या, संस्कृतविभाग :,**
**डी.सी.एम. कला-वाणिज्यमहाविद्यालयः,**
**वीरमगाम - अहमदाबाद- गुजरात**
**दूरभाष : 9428124566**

# संस्कृते महाकाव्यपरम्परा तदितिहासश्च

❑ मंजु जाटः

संस्कृतवाङ्मये महाकाव्यानां रचनापरम्परा वर्तते किलातीव प्राचीना सुदीर्घा सुसमृद्धा च। समालोचकाः महर्षिं वाल्मीकिं परमरमणीयस्य रामायणस्य रचयितारं आदिकविं मन्यन्ते तदुचितं सर्वथा। 'आद्यः कविरसि' इत्यनेनोत्तररामचरितोक्तवाक्येनापि सुसिद्धम्। आदिकवेः रामायणं वस्तुतो लौकिककाव्यभाषायाः प्रथमं सुविकसितं सुवासितं परमरमणीयं पुष्पपुञ्जं विद्यते यस्मादनेकानि काव्यानि प्रादुरभूवन्। 'मधुमयभणितीनां काव्यदर्शी महर्षिः' इत्युक्तिः वाल्मीकेः सर्वोत्कृष्ट-काव्यरचनायाः प्रमाणम्। अस्मिन् विषये यथावसरं विस्तरेण प्रतिपादयिष्यामः। सम्प्रति साहित्यशास्त्रगतः काव्यपदार्थः विचार्यते।

**काव्यपदार्थः** –

संस्कृतसाहित्ये महाकाव्यानां परम्परायाः परिचयात् पूर्वं महाकाव्यपदार्थविषये विचारः आवश्यकः प्रतिभाति तस्मात् सर्वप्रथममिदं विचार्यते यत् कोऽयं काव्यपदार्थः। कुङ् शब्दे कोतुमवश्यमाख्यातु-मर्हत्वात् काव्यः 'ओरावश्यके'[1] इत्यनेन सूत्रेण ण्यत् प्रत्यये कृते पुंसि काव्यशब्दोऽयं दैत्यगुरौ क्लीबे च ग्रन्थे। यथोक्तम् मेदिनीकोषे – 'काव्यं ग्रन्थे पुमाञ् शुक्रे काव्या स्यात् पूतनाधियोः[2]।' इति। यद्वा 'कवेरपत्यं' 'कुर्वादिभ्यो ण्यः[3]।' काव्यम्। काव्यपदमिदं ग्रन्थे कदा रूढिमापतत् इति न निश्चितम्। अत्रास्माभिः काव्यपदस्य व्युत्पत्तिलभ्योऽर्थः कोषगतार्थश्च दर्शितः सम्प्रति काव्यतत्त्वमर्मज्ञैरुक्तं भावार्थं दर्शयामः।

साहित्यशास्त्रे अतीव प्रसिद्धं बहुधा विचारितमिदं काव्यपदम्। अस्य काव्यपदार्थस्य व्याख्यानविषये काव्यमर्मज्ञाः एवं ब्रुवन्ति – 'शब्दार्थौ काव्यम्' इति **भामहः**, 'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली' इति **आचार्यदण्डी**, 'शब्दार्थशरीरं तावत् काव्यम्' इति **आनन्दवर्धनाचार्यः**, 'तददोषौ शब्दार्थौ सगुणावन-लङ्कृती पुनः क्वापि' इति **मम्मटाचार्यः**, 'वाक्यं रसात्मकं काव्यम्' इति **विश्वनाथः**, 'रमणीयार्थ-प्रतिपादकः शब्दः काव्यम्' इति पण्डितराज **जगन्नाथः**। अत्र केवलं सुप्रसिद्धानां काव्यतत्त्वज्ञानामेव काव्यलक्षणानि दर्शितानि सन्ति।

अत्र किञ्चिद् **विचार्यते**। प्रायशः आचार्याः शब्दार्थोभये काव्यत्वं स्वीकुर्वन्ति, परञ्चेतरे पण्डित-राजजगन्नाथादयः केवलं शब्दे एव काव्यत्व-मङ्गीकुर्वन्ति। पण्डितराजविचारितं शब्दमात्रे काव्यत्वं नास्ति उन्मत्तप्रलपितम् – '**एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातः स्वर्गे लोके कामधुग्** भवती, ति महाभाष्य- वाक्यादस्मात् सुविदितात् शब्दमात्रे काव्यत्वं प्रसिद्ध्यति।' आचार्यविश्वनाथस्य काव्यलक्षणेऽपि शब्दे एव काव्यत्वं सिद्धम्। यथाहि – 'वाक्यं स्याद् योग्यताकाङ्क्षासत्तियुक्तपदोच्चयः' पदानां समूहः वाक्यम्, पदञ्च – 'वर्णाः पदं प्रयोगार्हाः नन्वितैकार्थबोधकाः' वर्णाश्च पदम्। एवञ्च 'शब्दमात्रं काव्यम्' इति विश्वनाथस्य मतम्। रसगंगाधरे पण्डितराजेन युक्तिपूर्वकं शब्दार्थोभयकाव्यत्वं

खण्डितम्। आचार्यमम्मटोक्तकाव्यलक्षणखण्डनप्रसंगे सुपुरातनीयं शब्दार्थोभयकाव्यम् इति विचारसरणिः विस्तरेण अनेन प्रकारेण खण्डिताऽस्ति रसगंगाधरे काव्यशास्त्रीये अतीव प्रौढग्रन्थे –

**यत्तु प्राञ्चः**– 'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्' **इत्याहुः**। तत्र विचार्यते – शब्दार्थयुगलं न काव्यशब्दवाच्यम् मानाभावात्, 'काव्यमुच्चैः पठ्यते' काव्यादर्थोऽवगम्यते, 'काव्यं श्रुतम्' अर्थो न ज्ञातः', इत्यादिविश्वजनीनव्यवहारतः शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च। व्यवहारः शब्दमात्रे लक्षणयोपपादनीय इति चेत्, स्यादप्येवम्, यदि काव्यपदार्थतया पराभिमते शब्दार्थयुगले काव्यशब्दशक्तेः प्रमापकं दृढतरं किमपि प्रमाणं स्यात्। तदेव तु न पश्यामः। विमतवाक्यं त्वश्रद्धेयम्। एषैव च वेदपुराणादिलक्षणेष्वपि गतिः। अन्यथा तत्रापीयं दुरवस्था स्यात्। अपि च काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तम्? प्रत्येकपर्याप्तं वा? नाद्यः, 'एको न द्वौ' इति व्यवहारस्येव श्लोकवाक्यं न काव्यम् इति व्यवहारस्यापत्तेः। न द्वितीयः, एकस्मिन् काव्ये काव्यद्वयव्यवहारापत्तेः। तस्माद् वेदशास्त्रपुराणस्येव काव्यलक्षणस्यापि शब्दनिष्ठतैवोचिता[4]।'

यद्यप्यस्मिन् विषये काव्यप्रकाशरसगंगाधरादि- ग्रन्थानां टीकाकाराः परमपण्डिताः महावैयाकरणाः श्री**नागेशभट्ट**महाभागाः एवं व्याकुर्वन्ति – 'यदि त्वास्वादव्यञ्जकत्वस्याप्युभयत्राप्यविशेषाच्चमत्कारिबोधजनकज्ञानविषयताऽवच्छेदकधर्मवत्त्वरूपस्यानुपहसनीयकाव्यलक्षणस्य प्रकाशाद्युक्तलक्ष्यतावच्छेदकस्योभयवृत्तित्वाच्च' काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्तिः। अत एव वेदत्वादेरुभयवृत्तित्वप्रतिपादकः 'तदधीते' इत्यादिसूत्रस्थो भगवान् पतञ्जलिः संगच्छते। लक्षणयान्यतरस्मिन्नपि तत्त्वाद् 'एको न द्वौ' इतिवन्न तदापत्तिः। तेनानुपहसनीयकाव्यलक्षणं प्रकाशोक्तं निर्बाधम्[5]।

महामहोपाध्याय**गोकुल**नाथचरणास्तु – 'यद्यप्यर्थो न कविकर्म, तथापि प्रथमप्रकाश्यमेवात्र कर्माभिधीयते। अन्यथा शब्दनित्यतावादे मौनिना लिखित्वा ज्ञापिते च शब्देऽपि कविकर्मत्वं न स्यात्। तथा च विनिगमनाविरहात् अर्थविशेषावरुद्धः शब्द इव शब्दविशेषावरुद्धोऽर्थोऽपि लोकोत्तरचमत्कार- व्यञ्जकतया काव्यमित्युभयोः प्राधान्येन निर्देशः। काव्यं शृणोति' इति व्यवहारस्त्वर्थांशेऽपि शाब्दबोधार्थक शृणोति नोपपादयितुं शक्यते 'आत्मा श्रोतव्यः' इतिवत्। यत्तु–शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली' इति वचनम्, तत्र व्यवच्छेदः समुच्चय एव न त्वच्छिन्नत्वम्, विनिगमनाविरहात्। 'रसवच्छब्दार्थोभयत्वं काव्यत्वम्' इति काव्यलक्षणम्। तत्र गीतादावतिव्याप्तिवारणायार्थः अभिनेयार्थवारणाय शब्दोप्युपात्तः' **इत्याहुः**।

अनेन प्रकारेण नागेशभट्टगोकुलनाथभट्टमहा- महोपाध्यायगंगाधरशास्त्रिभिः **शब्दार्थोभयकाव्य- त्ववादः** विविधोक्तिप्रदर्शनपूर्वकं समर्थितस्तथापि पण्डितराज–जगन्नाथस्य **शब्दकाव्यत्ववादः** धत्ते खलु स्वीयवैशिष्ट्यम् मौलिकताम् च। केचन **नव्याः** – 'वस्तुतस्तु शब्दमन्तरा अर्थस्य अर्थमन्तरा शब्दस्य चावस्थानाभावेन तयोस्तादात्म्यं वर्तते। तादात्म्यञ्च

तद्भिन्नत्वेऽपि तदभेदेन प्रतीयमानत्वम्। अत एव अर्थे शब्दधर्मत्वव्यवहारो जायते यत् 'पदं श्रुतम्, अथार्थं शृणु।' अत्र अर्थे श्रावणप्रत्यक्षविषयत्वरूपः शब्दधर्मप्रयुक्तो वर्तते। एवञ्च शब्दार्थयोरुभयोः काव्यत्वस्वीकारे न प्रतिभाति कश्चन प्रत्यवायः[7]।'

विबुधैः शेमुषीसम्पद्भिः तलस्पर्शिविचारेण गम्भीरविमर्शेण च अस्मिन् विषये स्वमतमुपस्थापितम्। 'संक्षेपात् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली' इति **अग्निपुराणोक्तं** प्राथमिककाव्यलक्षणं स्वीकृत्य शब्दार्थोभयकाव्यवादिनः चिरं विचारितवन्तः तथा च शब्दार्थोभयनिष्ठं काव्यम् इति प्रोक्तवन्तः। भारतीयमनीषिणाम् एषा एव परम्परा वर्तते, ते तत्त्वोत्पत्तिं विचारयन्ति, निरन्तरं चिन्तयन्ति च। अस्तु तावत् यस्मै यन्मतं रोचते स तदेव स्वीकरोतीति लोके वेविलोक्यते।

एवञ्च – अदोषौ च्युतसंस्कृत्यादिनित्यदोषरहितौ – यत् सत्तयोद्देश्यप्रतीतिविघातको भवेत् स दोषः। अथवा रमणीयार्थविघातको दोषः, अथवा उद्देश्यप्रतीति-प्रतिबन्धकतावच्छेदकत्वं दोषत्वमित्युक्तलक्षणेन दोषेण रहितौ, सगुणौ माधुर्यादिगुणसहितौ, रजस्तमःसत्त्वातिरिक्तस्वरूपो माधुर्यौजःप्रसादाभिधेयः काव्यात्मभूतरसनिष्ठो धर्मविशेषो गुणः, यद् वा स्थिरत्वे सति रसादीनां साक्षादुत्कर्षजनकधर्मत्वं गुणत्वम् इति –

**'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः[9]॥'**

इति प्रकारकगुणसहितौ, सर्वत्र सालंकारौ – रसोपकारकत्वे सति तद्वृत्तित्वं, तथात्वे सति रसनियतस्थितिकत्वम्, अनियमेन रसोपकारकत्वम् अलङ्कारत्वम् –

**'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः[10]॥'**

तदलङ्कारसहितौ, क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः इति प्रकाशे मम्मटः। तादृशौ शब्दार्थौ काव्यमिति परिष्कृतः पन्थाः। पुनश्च –

'चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्द-त्वम्, यत् प्रतिपादितार्थविषयकभावनात्वं चमत्कार-जनकताऽवच्छेदकं तत्त्वम्, विशिष्टजनकताऽवच्छेद-कार्थप्रतिपादकता संसर्गेण चमत्कारत्वमेव वा काव्यत्वमिति फलितम्।' इत्थमाचार्यैः काव्यलक्षणानि लक्षितानि।

वस्तुतस्तु लोकोत्तररसबोधनसमर्था या वर्णना, तत्र यो निपुणः, स कविः, तस्य कर्म काव्यम् भवति। लोकोत्तररसबोधने समर्थं वर्णनं निर्दुष्टं सगुणं प्रायश्चालङ्कारसहितं भवत्येव। लौकिकपदार्थजन्या-नन्दातिरिक्तं किमप्यनिर्वचनीयं वस्तुविशेषं रसं जनयति काव्यम्। काव्यं भवति ललितपदकदम्बकं प्रतीय-मानार्थजीवनं सत्प्रवृत्तिप्रयोजकम् शिवेतरक्षतिकारकं शब्दार्थोभयपर्याप्तं किमपि विलक्षणं कविकर्म। काव्यसृष्टिः नवरसोपेता सर्वान् सर्वदा ह्लादयति, नैराश्यनीहारं निरस्यति, उत्साहं समेधयति, लौकिकं जनं सुखयति, सहृदयं चमत्करोति, मुमुक्षुं मोचयति, कविभारतीयम् अघटितमपि घटयन्ती निखिलं प्रसाधयति।

**आचार्यकुन्तको** वक्रोक्तिसम्प्रदायप्रवर्तकः

काव्यमेवं लक्षयति[11] –

**'शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि'।।**

'शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायि ध्वनिः' इति आचार्य**विद्याधरः**।

महर्षिवाल्मीकिव्यासकालिदासादयश्च महाकवय एव एतादृशं काव्यं रचयितुं सक्षमाः सन्ति। तेषां काव्येषु प्रतिपदं रसं निस्यन्दते। तेषां महाकाव्यानि विलोक्य, विविच्य विश्लिष्य च काव्यशास्त्रज्ञाः काव्यानां मापदण्डान् स्थापयन्ति काव्यलक्षणानि निर्मान्ति। एतस्मादेवानन्दवर्धनाचार्याः ब्रुवन्ति –

**'रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानाम्...**[12]।'

लक्ष्यमाश्रित्य लक्षणं[13] क्रियते। अव्याप्ति-अतिव्याप्ति-असंभवदोषरहितं लक्षणं भवति। लक्ष्यानुसारमेव लक्षणग्रन्थाः निर्मीयन्ते व्यवस्थाप्यन्ते च लक्षणानि। साहित्यपरम्परायां प्रतिभावतां महाकवीनां काव्यानि लक्ष्यभूतानि भवन्ति। तदनुसारमेव परिकल्प्यन्ते लक्षणानि –

**'वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः।**
**तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः**[14]।।'

अस्मिन् लौकिककाव्यविकासक्रमे वस्तुतः कवीनां महाकवीनां चानेककोटयः दृष्टिपथि आयान्ति। शास्त्रीयवाङ्मयस्य चिन्तनस्य प्रतिभायाश्च संनिवेशात् वैविध्यमिदं विलोक्यते, यथोक्तम् आचार्यभामहेन –

**'काव्यं तु जायते जातु कस्यचित् प्रतिभावतः**[15]।'

आचार्यदण्डी च –

**'नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मितम्।**
**अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः**[16]।।'

अत्र आगत्य प्रतिभा व्युत्पत्तिश्च द्वे अनिवार्ये जाते काव्यनिर्माणे, क्वचिच्च व्युत्पत्ति-अभ्यासौ च काव्यनिर्माणायावश्यकौ प्रोक्तौ –

**'न विद्यते यद्यपि पूर्ववासना**
**गुणानुबन्धि प्रतिभानमद्भुतम्।**
**श्रुतेन यत्नेन च वागुपासिता**
**ध्रुवं करोत्येव कमप्यनुग्रहम्।**[17]।'

केचन प्रतिभामुपासितवन्तः। प्रतिभामाश्रित्य लिखितवन्तः। अपरे अभ्यासेन काव्यानि रचितवन्तः। अर्थात् एते प्रतिभाकवयः अन्ये चाभ्यासकवयः अभूवन्। तस्मादेव लौकिकसंस्कृतवाङ्मये काव्यलेखनशैलीगता धाराद्वयी दृश्यते। एका धारा सरसं सरलं काव्यस्वरूपं प्रस्तौति, द्वितीयायां धारायां कलाप्राधान्यं विलोक्यते। तत्रायासजन्यचमत्कारो विलसति। सम्भवतः युगानुसारं काव्यलेखनं भवति। अन्यस्य प्रबलानुरोधं विना न कोऽपि स्वीये काव्ये काठिन्यं संनिवेशयितुं समीहते। पाश्चात्यकाव्यशास्त्रज्ञः **लोन्जाईनस**महाशयो लिखति –

"Poetry should come as naturally as leaves on the tree."

वर्तमाने काले आधुनिकाः केचन शालीनबुद्धयो कथयन्ति यत् भारतीयसंस्कृत्यां संस्कृतवाङ्मये च नारीणां प्रस्थितिः नास्त्यादरणीया। भ्रान्ता हि ते। संस्कृतकवयः नार्याः उदात्तरूपं वर्णयन्ति, तस्याः अन्तर्मनः पठन्ति, तस्याः वेदनां श्रुत्वा तत्कालं वदन्ति –

**'उत्खातलोकत्रयकण्टकेऽपि**
**सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि।**
**त्वं प्रत्यगस्मात् कलुषप्रवृत्ता-**
**वस्त्येव मन्युर्भरताग्रजे मे[18]।।'**

**मुनिमार्कण्डेयस्तु** धर्मार्थकामानां त्रयाणां पुरुषार्थाणां प्रतिष्ठा एव नार्यां वर्णयति -

**भर्तव्या रक्षितव्या च भार्या हि पतिना सदा।**
**धर्मार्थकामसंसिद्ध्यै भार्या भर्तृसहायिनी।।**
**यदा भार्या च भर्ता च परस्परवशानुगौ।**
**तदा धर्मार्थकामानां त्रयाणामपि संगतम्।**
**कथं भार्यामृते धर्ममर्थं वा पुरुषः प्रभो।**
**प्राप्नोति काममथवा तस्यां त्रितयमाहितम्[19]।।**

एवञ्च संस्कृतकवयः प्रत्येकं युगे सामाजिकीं धार्मिकीमार्थिकीं राजनीतिकीं च दशां स्वीयकाव्येषु वर्णितवन्तः। न तैः लेशमपि पक्षपातः कृतः। सम्प्रति संस्कृतमहाकाव्यानां परमप्रसिद्धानां परिचयः संक्षेपेण महाकाव्यपरम्परां दर्शयितुं प्रस्तूयते। अत्रेदं ज्ञातव्यमस्ति यत् महर्षिवाल्मीकेः रामायणम् महर्षेः व्यासस्य च महाभारतम् उभे आर्षकाव्ये स्तः।

संस्कृतमहाकाव्यानां विषये एतदपि ध्यातव्यं वर्तते यत् कवयः काव्यानां कथानकं सावधानतया स्वीकृतवन्तः। एतस्मादेव कारणात् कानिचित् महाकाव्यानि ऐतिहासिकानि सन्ति, कतिपयानि शास्त्रकाव्यानि वर्तन्ते, अन्यानि संधानकाव्यानि अपराणि च गीतिकाव्यानि, इतराणि सन्देशकाव्यानि, पराणि च स्तोत्रकाव्यानि, शतककाव्यानि च वर्तन्ते।

**- शोधार्थी,**
**ज.रा.राजस्थानसंस्कृतविश्वविद्यालयः, जयपुरम्**

**सन्दर्भाः**

1. पा.अष्टा ३/१/१२५
2. मेदिनीकोशे - ११३/११
3. पा. अष्टा. ४/१/१५१
4. रसगंगाधरमूलम्, प्र.आ., पृ.सं. १५-२१
5. रसगंगाधरः, चन्द्रिका टीका, पृ. १९-२०
6. रसगंगाधरे प्र.आ., चन्द्रिका टीका, पृ. १९
7. प्रौढनिबन्धसौरभम्, पृ.सं.२५
8. स्याच्चेतो विशता येन सक्षता रमणीयता। शब्देऽर्थे च कृतोन्मेषं दोषमुद्घोषयन्ति तम्।। चन्द्रालोके २/१
9. काव्यप्रकाशे, ८.६६
10. काव्यप्रकाशे - ८/६७
11. वक्रोक्तिजीवितम्, १/७
12. ध्वन्यालोके - १/१ वृत्तौ
13. असाधारणधर्मो लक्षणम्।
14. ध्वन्यालोके - ३/१९
15. काव्यालंकारे - १.५
16. काव्यादर्शः - १/१०३
17. काव्यादर्शे - १/१०४
18. रघुवंशे - १४/७३
19. मार्कण्डेयपुराणे - २१/६८-७१

# श्रीलालबहादुरशास्त्रिशतकानुशीलनम्

❑ डॉ. बाबूलालः मीना

एकलेऽस्मिन् विश्वरूपे गौरवास्पदं समवाप्तं सर्वतन्त्रस्वतन्त्रप्रभुतासम्पन्नं हिमाद्रिकिरीटं भारतराष्ट्रम् आंग्लैः व्यवसायवञ्चनामाध्यमेन स्वायत्तीकृतम्। अस्माकं भारतदेशः आंग्लानाम् अधिकारे परवशीभूतः। सर्वे जानन्ति एव प्राणभृतः प्राणिनः यत् सर्वं परवशं दुःखमिति। अतः परतन्त्रेऽस्मिन् भारते भारतीयैः जनैः वर्णनातीतस्य कष्टस्य समुत्पीडनम् अनुभूयते स्म इति वक्तुं कठिनं वर्तते। भारतदेशः धर्मप्राणदेशः विद्यते। मन्ये भारतीयानां तपःप्रभावादेव **अक्टूबरमासस्य** द्वितारिकायां द्वौ पुराणपुरुषौ आविर्भूतौ। तयोरेकः नाम्ना, वचसा, नेपथ्येन कार्येण समस्तजागतिककार्यकलापेन वास्तवं महात्मा **महात्मागाँधी,** अस्माकं भारतीयानां 'बापू' इति नाम्ना प्रसिद्धः। अपरश्च महानुभावो जातः स तु महामनस्वी, दृढ़व्रतः, तेजोराशिः, प्रातःस्मरणीयः साक्षात् सनातन-पुरुषः स्वनामधन्यः भारतदेशस्य प्रधानमन्त्रीति पदस्थो यावज्जीवं स्वदेशस्य भारतस्य सुखसौभाग्य-समृद्धिसुरक्षाविधौ बद्धपरिकरः **श्रीलालबहादुर-शास्त्रिमहोदयः** विद्यते। शास्त्री महोदयः बाल्यादेव –

**विलक्षणा ये पुरुषाः पृथिव्यां**
**नूनं हि ते सन्ति नवावताराः।**
**प्रमातुमेतत् वचनं तु मन्ये**
**जातः स्वयं लालबहादुरो यः।।**

विषमासु अपि परिस्थितिषु श्रीशास्त्रि-महाभागः गृहस्थजीवनदायित्वस्य उपेक्षां कृत्वापि भारतराष्ट्रं प्रति स्वदायित्वस्य परिपालनं सम्यक् कृतवान्। श्रीशास्त्रिमहाभागः शरीरेण सामान्यः वेशभूषया भारतीयः, वचसा स्पष्टवक्ता, धीरः, गम्भीरः, राजनीतिकुशलः, अन्तःप्राज्ञः, बहिःप्राज्ञश्च लौहव्यक्तित्वसम्पन्नः आसीत्। तस्य देशप्रेम अगाधम् आसीत्। **श्रीकृष्णदत्तः** शर्म-महाभागः स्वग्रन्थे लिखति –

**बहिर्यथा दारुचये जले च**
**शैत्यं सुगन्धः सहजः पृथिव्याम्।**
**देशानुरागोऽपि शिशौ तथैव**
**अदृश्यरूपेण निगूढ़ आसीत्[1]।।**

बाल्यकाले एको मालाकारः अस्य विषये उद्घोषयति यत् अयं शिशुः अग्रे जीवने महान् भविष्यति–

**उद्यानरक्षी करुणार्द्रचित्तो**
**व्यपेतभीतिं तमुवाच चेत्थम्।**
**सत्यं वदेश्चेत् त्विदमेव सत्यम्**
**नास्त्यत्र शंका भविताऽसि सिद्धः[2]।।**

अयं महाभागः बाल्यकाले महात्मनः गान्धिनः विचारैः अतीव प्रभावित आसीत्। यथाह श्रीकृष्णदत्तः कविः –

**शिक्षाप्तिकाले सरलः किशोरः**
**स्वदेशभक्तः सुविचारदक्षः।**
**गान्धिमहाभागविचारसारं**
**श्रुत्वा महोत्साहभरो बभूव[3]।।**

तेजस्विनां स्वभावेन तेजोराशिः प्रवर्धते इति रीत्या श्रीशास्त्रिमहाभागः तत्कालीनस्य प्रधानमन्त्रिणः

पण्डितजवाहरलालनेहरूमहाभागस्य विश्वस्तेषु सहयोगिवर्येषु स्वकीयैः विशिष्टगुणैः सर्वप्रथमं स्थानं प्राप्तवान्। अतः श्रीनेहरूमहोदयानन्तरं श्रीशास्त्रिमहानुभावः भारतराष्ट्रस्य प्रधानमन्त्रीपदम् अलंकृतवान्। आंग्लशासकाः भारते भारतीयां संस्कृतिं विनष्टवान्-अनेन कारणेन सःमहाभागः मनसि दुःखी जातः -

**गौरांगजैः शासनदर्पखर्वैः**
**प्रभुत्वसम्पन्नजनैर्मदान्धैः।**
**निरंकुशैर्लङ्घितपूतवृत्तैः**
**विनाशिता भारतसंस्कृतिर्नः[4]।।**

स्वराष्ट्रसेवया दीनसेवया च शास्त्रिमहोदयः प्रसन्नताम् अनुभवति स्म। यथाह श्रीकृष्णदत्तशर्मा कविः -

**स्वराष्ट्रसेवा व्रतपालकोऽसौ**
**निःस्वार्थभावेन जनान् सिषेवे।**
**कार्षान् निरीहान् दलिताँश्च दीनान्**
**निषेवमाणो मुदमाप नित्यम्[5]।।**

स्वतन्त्रताप्राप्त्यनन्तरं श्रीलालबहादुरशास्त्रि-महोदयः सत्तारूढभारतीयराष्ट्रीयकांग्रेसदलस्य सदस्यत्वेन भारतसर्वकारस्य मन्त्रिप्रभृतिषु विविधेषु पदेषु सेवाकार्यं कुर्वन् भारतस्य राष्ट्रस्य चतुरस्रविकासे एकतानेन मनसा रात्रिन्दिवं प्रयासपरो बभूव। पण्डितनेहरूमहोदयस्य अनन्तरं अस्य भारतदेशस्य प्रधानमन्त्रिपदे श्रीलालबहादुरशास्त्रिमहोदयः सर्वसम्मत्या सत्तारूढकांग्रेसदलस्य नेतृत्वे सम्मतो बभूव। **अष्टादशमासावधिके** श्रीशास्त्रिमहोदयस्य प्रधानमन्त्रित्वकाले अयं भारतदेशः विकासस्य सर्वस्मिन् क्षेत्रे अग्रेसरः बभूव। सः जगतः आदर्शः आसीत्। कविवरः कथयति यत् -

**सम्प्राप्य राज्याश्रितवैभवानि**
**सुरेन्द्रलोकेऽपि सुदुर्लभानि।**
**स्वजीवनं साधु समानशीलः**
**प्रयापपामास गतस्पृहोऽसौ[6]।।**

सः गतस्पृहः, धनसंग्रहरहितः महातपस्वी च आसीत्। कविवरः लिखति तद्विषये -

**प्रसादसौख्यं धनवैभवं च**
**महार्घवस्त्राणि च कोषजातम्।**
**आडम्बरं चैव छलप्रपञ्चं**
**नैच्छत् कदापीह महातपस्वी[7]।।**

स रेलमन्त्रित्वकाले रेलदुर्घटनया अतीव दुःखितो बभूव। तस्यां घटनायां नैके जनाः मृताः। अतः सः महोदयः मन्त्रित्वपदं त्यक्तवान्-

**मृदुः प्रकृत्या करुणार्द्रचित्तो**
**विभाव्य चात्मानमयोग्यमेव।**
**तत्याज मन्त्रित्वपदं तथैव**
**योगी यथा जागतिकं प्रपञ्चम्[8]।।**

प्रधानमन्त्रिणः नेहरूमहाभागस्य कथनेनापि त्यागपत्रं न पुनः गृहीतवान्, पदञ्च न स्वीकृतवान् -

**प्रधानमन्त्री च जवाहराख्यो**
**लोके यशोभिर्नितरां प्रसिद्धः।**
**पुनः पुनश्चानुरुरोध तीव्रं**
**नांगीचकार स्वपदं स आह[9]।।**

नेहरूमहाभागस्य मृत्योरनन्तरं सद्वृत्तशीलः स्थिरचित्तवृत्तिश्च सः प्रधानमन्त्रिपदम् अलंकृतवान् -

**महामना मातृमहीसुपुत्रः**
**सद्वृत्तशीलः स्थिरचित्तवृत्तिः।**

**उदारधीः धीरमना विधिज्ञः**
**प्रधानमन्त्रित्वमलंचकार**[10]**।।**

मातृभूमिं प्रति समर्पितो भूत्वा सः अहर्निशं भारतदेशस्य स्वसेवया उन्नतिं कृतवान्। दर्पं कदापि स्वचरित्रे न अंगीकृतवान् –

**स्वमातृभूभक्तिरसानुरक्तः**
**सन्त्यज्य भावानखिलान् विरक्तः।**
**दिवानिशं लोकहितं प्रधीरो**
**विचिन्तयन् कर्मरतो बभूव।।**
**यत्रापि कुत्रापि गतः प्रधानः**
**स्वदेशभक्तो विगताभिमानः।**
**तत्रैव वाग्मी मृदुलस्वभावो**
**लोकार्चितोऽभूत् न दधार दर्पम्**[11]**।।**

शास्त्रिमहोदयस्य प्रधानमन्त्रित्वकाले एकः प्रतिवेशी देशः युद्धोन्मादग्रस्तः सन् आक्रमणञ्चकार, किन्तु सुदृढ़स्य इच्छावतः श्रीलालबहादुरशास्त्रि-महोदयस्य नेतृत्वे भारतदेशः न केवलं तस्य देशस्य आक्रमणमेव विफलं चकार, प्रत्युत तस्य देशस्य सेनाध्यक्षस्य विपुलानि अस्त्रशस्त्राणि सर्वम् एव पराभवं प्राप्तानि। तत्पश्चात् भारतपाकयोः युद्धविरामस्य सम्मेलने विदेशे ताशकन्दे श्रीशास्त्रिमहोदयः गतवान्, परन्तु द्विपक्षवार्तापरिणामं सः अनिच्छया स्वीकृतवान्। कविवरः लिखति यत् –

**द्विपक्षवार्तापरिणामसारम्**
**अनिच्छया स्वीकृतवान् मनस्वी।**
**विभाव्य सम्मानविरुद्धमेतत्**
**ग्लानेः परां कोटिमुपागतोऽसौ**[12]**।।**

पुनश्च तत्रैव स्वप्राणान् तत्याज –

**दुर्दैवयोगात् स महातपस्वी**
**सत्यप्रवक्ता परिखिन्नचेतः।**
**विचारयन्नात्मकृतं विकृत्यं**
**तत्याज हि प्राणधनं च तत्र**[13]**।।**

साम्प्रतं कृतज्ञो भारतदेशः पौनःपुन्येन श्रीमन्तं शास्त्रिमहोदयं प्रति कार्तज्ञं निवेदयन् जयति श्री शास्त्रीति समुद्घोषयति। श्रीमतः लालबहादुरशास्त्रिणः प्रशस्तौ **डा.हीरालालपाण्डेयस्य** श्लोकोऽत्र ध्यातव्यः विशेषतः –

**सौजन्येन विभूषितोऽतिविशदः प्रज्ञानदीक्षाव्रती**
**देशस्यास्य समृद्धयागविभवैः स्वातन्त्र्ययागे रतः।**
**भूत्वा भारतनायको प्रतिजनं निष्पाद्य निश्चिन्ततां**
**शास्त्री लालबहादुरो विजयते नेता प्रणेता कृती।।**

– **सहाचार्यः**, संस्कृतविभागः
महारानी श्रीजया राजकीयः स्नाकोत्तरः
महाविद्यालयः, भरतपुरम् (राजस्थानम्)

**सन्दर्भाः** –

1. **श्रीकृष्णदत्तशर्मणा विरचितम्**-श्रीलालबहादुरशास्त्रिशतकम्, (सम्पादन, अनुवाद एवं समीक्षा- डॉ. बाबूलाल मीना, प्र.सं. २०१९, मान्यता प्रकाशन, दिल्ली), श्लोक-१८
2. तदेव, श्लोक संख्या २५
3. तदेव, श्लोक संख्या ३०
4. तदेव, श्लोक संख्या ३६
5. तदेव, श्लोक संख्या ४४
6. तदेव, श्लोक संख्या ६३
7. तदेव, श्लोक संख्या ६४
8. तदेव, श्लोक संख्या ६९
9. तदेव, श्लोक संख्या ७०
10. तदेव, श्लोक संख्या ७४
11. तदेव, श्लोक संख्या ७५-७६
12. तदेव, श्लोक संख्या ९७
13. तदेव, श्लोक संख्या ९९

पुस्तक-समीक्षा

# यज्ञविज्ञानग्रन्थः

❑ **महामहोपाध्यायदेवर्षिकलानाथशास्त्री**
**प्रधानसम्पादकः**

वेदविज्ञानस्य विश्वविदितः पुरोधाः सर्वशास्त्रविशारदो विद्वत्सार्वभौमः पं. मधुसूदन-ओझावर्यः सुपरिचितो भारते यस्य शतशो ग्रन्थाः प्रकाशिताः सन्ति। तस्यैको ग्रन्थः सपद्येव विश्वगुरुदीपआश्रमशोधसंस्थानेन प्रकाशितोऽस्ति हिन्द्यनुवादेन टीकया च सह। सोऽयं ग्रन्थोऽस्ति **'निरूढपशुबन्धः'**। वर्षाकाले करणीया वैदिकी यष्टिः निरूढपशुबन्धनाम्नि ग्रन्थेऽस्मिन्नभिहिताऽस्ति। यज्ञस्य सम्पूर्णो विधिः, इष्टिकाचयनं, वेदीनिर्माणमारभ्य वर्णितोऽस्ति ग्रन्थेऽस्मिन्। बहोः कालात् पूर्वमयं ग्रन्थो मुद्रितोऽभूज्जयपुरे किन्तु दशकेभ्योऽनेकेभ्यः सोऽयमनुपलब्धोऽभूद्विदुषां कृते।

साम्प्रतमेतस्य टिप्पणीसहितं सानुवादं संस्करणं प्रकाशितमस्तीति सुमहान् सन्तोषः। अनुवादकाष्टिप्पणीकारश्चास्ति युवा विद्वत्कविः डॉ. प्रवीण पण्ड्या, सम्पादकश्चाऽस्ति डॉ. सुरेन्द्र कुमार शर्मा। प्रतिपृष्ठं मूलपाठः प्रस्तुतोऽस्ति तेन सहैव प्रतिप्रघट्टकं टिप्पणी हिन्द्यनुवादश्च मुद्रितोऽस्ति। वैदिकी इष्टिप्रक्रिया यथाविधि वर्णिता नूतनदृष्टिं नूतनं च ज्ञानमत्र प्रवर्तयतीत्येतस्य वाचनेन स्पष्टं ज्ञायते। प्रारम्भे डॉ. प्रवीण पण्ड्यावर्यस्य अनुवाक् डॉ. सुरेन्द्रकुमारशर्मणः सम्पादकीयं च मुद्रितमस्ति।

विदुषां शुभाशंसनान्यपि प्रारम्भे मुद्रितानि। अन्ते वि.सं. २०१० वर्षे पं.मधुसूदन ओझावर्याणां सुपुत्रेण पं. प्रद्युम्नशर्मणा मुद्रितस्य ग्रन्थमूलपाठस्य यथावत् प्रतिकृतिरपि सूचनार्थं मुद्रिताऽस्ति। शोधसंस्थाने बहवो ग्रन्थाः सम्पादिताः प्रकाशिताश्चेति विदन्त्येव विद्वांसः, तस्यैव पं. ओझा वेदविज्ञानग्रन्थ-मालाया एकं पुष्पमस्तीदं पुस्तकमिति मुखपृष्ठे सूचितमस्ति। शोधसंस्थानस्य प्रबन्धकस्य (उपाध्यक्षस्य) महामण्डलेश्वरस्वामिज्ञानेश्वर-पुरीवर्यस्य शुभाशंसाऽप्याङ्गलभाषायां प्रारम्भे मुद्रिताऽस्ति।

**निरूढपशुबन्धः** प्रणेता- विद्यावाचस्पतिः पं.श्रीमधुसूदन ओझा। **अनुवादक**ष्टिप्पणीकारश्च डॉ.प्रवीण पण्ड्या, **सम्पादकः** डॉ.सुरेन्द्रकुमार शर्मा, **प्रकाशकः**- विश्वगुरुदीप आश्रम शोध संस्थान, कीर्तिनगर, श्याम नगर, सोडाला, जयपुर, पृ.सं. ८0, मूल्यम् 120/-

---

# रचनासङ्ग्रहः

भारत्याः सहसम्पादकः, राजस्थाने संस्कृत-महाविद्यालयानामध्यक्षपदं, संस्कृतशिक्षानिदेशा-लयस्य निदेशकपदं चाधिष्ठितवान् विद्वद्वर्यः **प्रो.सुरेन्द्रकुमार शर्मा** संस्कृते, हिन्दीभाषायां चानेकेभ्यो वर्षेभ्यो विविधविषयविवेचकान् लेखान् विलिख्य, विविधकाव्यरचनाश्च प्रणीय सुदीर्घसारस्वतसेवां विहितवानिति विदन्त्येव पाठकाः। विद्वद्वर्यस्यास्य विविधरचनानां सङ्ग्रहः **'रचनालोक'** शीर्षकवहः सपद्येव प्रकाशमाप्त इति ज्ञात्वा प्रसीदेयुः संस्कृतसेवकाः। सङ्ग्रहेऽस्मिन्

प्रथमतो गोविन्ददेवा-ष्टकानन्तरं समये समये विलिखिताः सप्तदश संस्कृत- लेखाः सन्ति येषु काव्यशास्त्रीयाः शोधलेखा अपि सन्ति कालिदास-भारवि-माघादीनां समीक्षणपरा निबन्धा अपि, आयुर्वेदस्योपवदेत्वं, संस्कृतपत्रिका परिचायनं च समर्थयन्तो लेखा अपि।

एतदनन्तरं संस्कृतसाहित्यस्य विविधान् विषयान् विवेचयन्तः भारतीयानुत्सवान् परिचाययन्तश्च हिन्दीभाषीया लेखाः (10) संगृहीताः सन्ति ये समये समये विलिखिता अभूवन्। तदनु समये समये प्रणीताः संस्कृतकाव्यरचनाः सङ्कलिताः सन्ति यासां रचनायाः समयोऽप्यन्ते सूचितोऽस्ति। रचना इमाः स्पष्टतो वैविध्यं स्पृशन्ति। कतिपयकाव्यरचना विभिन्न-रजतपटीयगीतानां लयानुसारं प्रणीताः सन्ति, देवस्तुतिपरा रचना अपि वर्तन्ते। प्रो. सुरेन्द्रकुमारशर्मा हिन्द्यामपि काव्यरचनाः कृतवान्। एवंविधाः हिन्दीकाव्यरचना अप्यन्ते संगृहीताः सन्ति।

रचनासंग्रहस्यास्य सम्पादनं विद्वद्वर्याणां शिष्येण डॉ.हरिसिंह राजपुरोहितेन कृतमस्ति। ग्रन्थस्यान्ते प्रो. सुरेन्द्रकुमारशर्मणा स्वकीय एको जीवनानुभवोऽपि सूचितोऽस्त्येकस्मिन् लेखे यत् कथं श्रीराममन्त्रोऽयं तस्य जीवने कष्टनिवारणस्य मनोवाञ्छितप्रदानस्य च चमत्कारं स्पष्टतः प्रादात्- **'आपदामपहर्तारं दातारं सर्वसम्पदाम्। लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्।'** इति।

स्पष्टमेवेदं यद् भाषाद्वयस्य विविधविषयक-रचनानां सङ्ग्रहोऽयं सर्वविधानां पाठकानां कृते प्रभूतां हृदयरञ्जिनीं सामग्रीं प्रस्तौति। सङ्ग्रहस्यास्य हार्दिकं स्वागतं विधास्यते पाठकैरिति सहर्षमभिनन्दामः प्रो.सुरेन्द्रकुमार शर्माणं सम्पादकं प्रकाशकं च।

**रचनालोकः- प्रणेता-** प्रो.सुरेन्द्रकुमार शर्मा, **सम्पादकः** डॉ.हरिसिंहराजपुरोहितः, **प्रकाशकः** रचना प्रकाशन, मिश्रराजाजी का रास्ता, चांदपोल बाजार, जयपुर, पृ.सं. 320, मूल्यम् 995/-

नारी-स्तम्भः

# वनदेवी तुलसी गौड़ा

❑ डॉ. राजेश्वरी भट्टः

सदूरे ग्रामे निवसन्त्यपि, औपचारिक्या शिक्षया सर्वथा वञ्चिताऽपि आत्मना विहितैर्लोकोत्तरकर्मभिः 9 नवम्बर 2021 तमे वर्षे राष्ट्रपति- रामनाथकोविंद-महोदयेन राष्ट्रस्य सर्वोच्चेन चतुर्थेन **'पद्मश्री'** इति दुर्लभेन सम्मानेन सम्मानिता, प्रधानमंत्रिनरेन्द्रमोदी-महोदयेन नमस्कृता, कर्नाटकप्रदेशे **'वनदेवी'** इति नाम्नाऽभिज्ञाता, वृक्षप्राणा **तुलसीगौड़ा** अद्य लोके प्रशंसनीया, प्रेरणीयाऽनुकरणीया, पर्यावरणविशेषज्ञा-रूपेण विश्रुता वर्तते। 65 वर्षेभ्यः सततं वृक्षाणां संरोपणे, संवर्द्धने, संरक्षणे च मातृवत् संलग्ना तुलसीगौड़ा 'कर्नाटकप्रदेशे' **'होनालीग्रामे'** जनजात्या सम्बद्धे परिवारे जनिमलभत। आर्थिकदृष्ट्या अभावग्रस्तेऽस्मिन् परिवारे परिजनानां कृते सुचारुरूपेण जीवननिर्वाहोऽपि दुष्कर आसीत्। विधिप्रातिकूल्येन द्विवर्षस्य वयस्येव बालिकायाः तुलस्याः पितुर्निधनं जातम्। भर्तुरकालमृत्युना विचलिता तुलस्या जननी अनाथा असहाया, किंकर्त्तव्यविमूढ़ा च जाता। गच्छति काले शनैः शनैः बालिकाया म्लानं ग्लानञ्च मुखं दृष्ट्वा सा कथञ्चित् प्रकृतिस्था जाता। सम्प्रति जीविकोपार्जनाय तुलस्या जननी एकस्यां वृक्षशालायां कार्यं कृतवती। गृहें एकाकिनी अशरणा, बालिका तुलसी अपि जनन्या सार्धं नित्यं वृक्षशालायां गच्छन्ती बाल्यादेव विविधानां वृक्षाणां प्रकृतिविषये नैपुण्यमधिगतवती। ग्रामीणे परिवेशे 11 वर्षस्य वयस्येव जनन्या पुत्र्याः तुलस्या विवाहो **'गोविन्दगौड़ा'** इति नवयुवकेन सह विहितः।

दुर्भाग्येन गौड़ादम्पत्योः वैवाहिकजीवनं, नभसि विद्युल्लेखेव निमिषमात्रेण सुखदमासीत्। नातिचिरमेव तुलसीगौड़ायाः पतिः क्रूरेण कालेन कवलीकृतः। शून्यहृदया अशरण्या तुलसीगौड़ा मन्दीभूते शोके गृहस्य पार्श्वे स्थितायाम् ऊषरभूमौ क्षुपानां, वृक्षाणां संरोपणाभियाने संलग्ना जाता। सहैव दीर्घंयावत् जनन्या सह वृक्षशालायां वृक्षाणां संरोपणसंवर्द्धन- संरक्षणादि-कार्येषु व्यस्ता जाता। पर्यावरणक्षेत्रे तुलसीगौड़ाया अनिर्वचनीयं योगदानमनुभूय **2006** तमे वर्षे वनविभागे इयं वृक्षारोपकस्य पदे नियुक्तिं प्राप्तवती। सर्वथा वृक्षाणां संरक्षणाय समर्पिता तुलसीगौड़ा वृक्षशालायां स्थितस्य एकैकस्य पादपस्य विषये सावहिता दृश्यते। वृक्षसंरक्षणविषये तुलसीगौड़ाया अनन्यं नैपुण्यं दृष्ट्वा भारतीयवनसेवाया अधिकारी श्री **ए.एन.रेड्डी महापात्र** एकं विशालभूभागं वृक्षाच्छादितुं कर्त्तुं तुलस्यै न्यवेदयत्। रेड्डीमहोदयस्य मतेन वृक्षेभ्यः श्वसन्ती 'तुलसी' यं यं वृक्षं संरोपयति स नूनं पुष्पितः पल्लवितश्च भवति। तुलसीगौड़ाया अनिर्वचनीयेन वृक्षसेवाव्रते-नाभिभूतैः प्रदेशवासिभिः **'तुलसीगौड़ा पेड़ों का विश्वकोष'** एवं **'वनदेवी'** सदृशैः प्रशंसनीयैर्वचनैः प्रशस्ता जाता। कालेन वनविभागात् सेवानिवृत्ताऽपि वृक्षसेवायै कृतसंकल्पा 'तुलसीगौड़ा' पर्यावरणसंरक्षणे समर्पिता जाता। रुग्णावस्थायां चिकित्सकानां सेवामुपेक्ष्य वनौषधीनां सेवनं तुलस्यै अधिकतरं रोचते। वृक्षाच्छादिते सघनवने प्राणाँस्त्यक्तुं, पुनः वृक्षरूपेण जन्म ग्रहीतुं तुलस्या मनोरथो वर्तते।

अनुपमवृक्षसेवायै तुलसीगौड़ा देशविदेशे च सम्मानिता जाता। नैके पर्यावरणविदः तुलस्या निर्देशने पर्यावरणस्य प्रशिक्षणं प्राप्तुं गच्छन्त्यागच्छन्ति च। पर्यावरणपण्डिता तुलसीगौड़ा आत्मनो नैपुण्येन **1986** तमे वर्षे **वृक्ष**मित्रम् इति सम्मानेन सम्मानिता जाता। ततः **1999** तमे वर्षे **'कर्नाटक राज्योत्सव'** इति सम्मानेन सम्मानिताऽभवत्। सरलतायाः प्रतिमूर्तिस्तुलसीगौड़ा यदा **'पद्मश्री'** इति सम्मानं ग्रहीतुं पारम्परिक- वनवासिन्या वेशभूषया उपानहौ विना राष्ट्रपतिभवने प्रविष्टा जाता तदा तत्रोपस्थिता सभासदः करतल- ध्वनिना अस्याः स्वागतमकुर्वन्। वृक्षसेवा- व्रतधारिणी **'वनदेवी'** 'तुलसीगौड़ा' नूनं वन्दनीया वर्तते।

## हिन्दी अनुवाद

सुदूर गाँव में रहने वाली एवं औपचारिक शिक्षा से सर्वथा वञ्चित होने पर भी अपने लोकोत्तर कार्यों से 9 नवम्बर 2021 ई. में राष्ट्रपति रामनाथ कोविंद महोदय के द्वारा राष्ट्र के सर्वोच्च चतुर्थ **'पद्मश्री'** पुरस्कार से सम्मानित प्रधानमंत्री नरेन्द्र मोदी के द्वारा नमस्कृता, कर्नाटक प्रदेश में **वनदेवी** नाम से प्रसिद्ध वृक्षप्राणा तुलसी गौड़ा लोक में प्रशंसनीया अनुकरणीया एवं प्रेरणीया पर्यावरण विशेषज्ञ के रूप में प्रसिद्ध हैं। 65 वर्षों से निरन्तर वृक्ष संरोपण में माता की भाँति संलग्न तुलसी गौड़ा ने 'कर्नाटक' प्रदेश के **होनाली** गाँव में जनजाति से सम्बद्ध परिवार में जन्म ग्रहण किया। आर्थिक दृष्टि से अभावग्रस्त इस परिवार में परिजनों के लिए सुचारुरूप से जीवन निर्वाह भी दुष्कर था। विधाता की प्रतिकूलता से दो वर्ष की अवस्था में ही बालिका तुलसी के पिता की मृत्यु हो गई। पति की अकाल मृत्यु से विचलिता तुलसी की माता अनाथ, असहाय एवं किंकर्तव्यविमूढ़ हो गई। समय व्यतीत होने पर धीरे-धीरे बालिका का दुःखी एवं मुरझाया हुआ मुख देखकर माता ने धैर्य धारण किया। अब जीविकोपार्जन के लिए तुलसी की माता एक **'वृक्षशाला'** में कार्यरत हो गई। घर पर अकेली एवं असहाय होने के कारण तुलसी भी माता के साथ नित्य वृक्षशाला में जाने लगी एवं बाल्यावस्था से ही तुलसी को विविध वृक्षों की प्रकृति के विषय में निपुणता प्राप्त हो गई। ग्रामीण परिवेश में रहने वाली तुलसी की माता ने 11 वर्ष की आयु में ही **'गोविन्द गौड़ा'** नामक युवक के साथ तुलसी का विवाह कर दिया। दुर्भाग्य से गौड़ा दम्पती का वैवाहिक जीवन बादलों में बिजली की चमक के समान क्षणिक सुखमय था। शीघ्र ही तुलसी गौड़ा का पति काल का मुखग्रास बन गया। शून्यहृदया एवं अशरण्या तुलसीगौड़ा शोक के मन्द हो जाने पर घर के पीछे स्थित बंजर भूमि पर वृक्ष लगाने के अभियान में संलग्न हो गई। साथ ही लम्बे समय तक माता के साथ नर्सरी में वृक्ष लगाने, उनका संवर्द्धन एवं संरक्षण करने में व्यस्त हो गई।

पर्यावरण के क्षेत्र में तुलसीगौड़ा के अनिर्वचनीय योगदान को देखकर वनविभाग में **वृक्षरोपक** के पद पर 'तुलसी गौड़ा' की नियुक्ति हो गई। वृक्षों की रक्षा के लिए पूर्णतः समर्पित तुलसीगौड़ा नर्सरी में लगे हुए एक एक पौधे के विषय में जानती थी। वृक्ष संरक्षण के विषय में 'तुलसी गौड़ा' के अनन्य नैपुण्य से अभिभूत भारतीय वनसेवा के अधिकारी श्री

**ए.एन.रेड्डी** महोदय ने तुलसी को एक विशाल भूमि भाग को हरा भरा करने का आदेश दिया। रेड्डी महोदय के मत से वृक्षों के लिए ही साँस लेने वाली तुलसी गौड़ा जिस जिस वृक्ष को संरोपित करती है वह वृक्ष निश्चय ही पुष्पित पल्लवित होता है। तुलसी गौड़ा की अनिर्वचनीय वृक्षसेवा से अभिभूत प्रदेशवासियों द्वारा तुलसीगौड़ा को **'पेड़ों का विश्व कोष'** एवं **'वनदेवी'** जैसी प्रशंसनीय उपाधियों से सम्मानित किया गया है। वन विभाग से सेवानिवृत्त होने पर भी वृक्षसेवा के लिए संकल्पवती तुलसी गौड़ा पर्यावरण संरक्षण के लिए समर्पित है। रुग्णावस्था में भी चिकित्सकों की अपेक्षा जड़ी-बूटियों से उपचार करने में उनका अधिक विश्वास है। वृक्षाच्छादित सघन वन में प्राणों का त्याग हो तथा वृक्षरूप में ही पुनर्जन्म हो यही तुलसी गौड़ा की अभिलाषा है। अनुपम वृक्ष सेवा के लिए तुलसी गौड़ा को देश-विदेश में सम्मानित व आमंत्रित किया जाता है। अनेक पर्यावरण विशेषज्ञ पर्यावरण प्रशिक्षण प्राप्त करने के लिए तुलसी गौड़ा के पास आते-जाते रहते हैं। अपनी वृक्ष निपुणता के कारण तुलसी गौड़ा 1986 ई. में **वृक्षमित्र सम्मान** से सम्मानित हुई। 1999 ई. में तुलसी गौड़ा ने **'कर्नाटकराज्योत्सव'** सम्मान प्राप्त किया। सरलता की प्रतिमूर्ति तुलसी गौड़ा जब **'पद्मश्री'** पुरस्कार प्राप्त करने के लिए पारम्परिक वेशभूषा में बिना चप्पलों के नंगे पाँव राष्ट्रपतिभवन में प्रविष्ट हुई तब तुलसी गौड़ा की सरलता से अभिभूत सभासदों ने करतल ध्वनि से उनका स्वागत किया। वृक्षसेवा व्रतधारिणी तुलसी गौड़ा निश्चय ही वन्दनीया है।

**- पूर्व-संस्कृतविभागाध्यक्षा,**
**लालबहादुर-शास्त्री कॉलेज, जयपुर।**

आयुर्वेद-स्तम्भः

# कुर्याद्दीपोत्सवे यज्ञम्

❑ प्रो. बनवारीलालगौडः
राष्ट्रपतिसम्मानितः, पूर्व-कुलपतिः

**उत्सवप्रधानो ह्ययं भारतदेशः । विविधभाषा-भाषकाः ह्यत्रत्याः जनाः निवसन्त्यपि च विविधेषु भूभागेषु। आहार-विहारेऽपि वैविध्यं वर्तते भारतवर्षे। सर्वत्रैव च तत्सात्म्ययुक्तानामाहारद्रव्याणां भेषजानाञ्चावचारणम्भवति, अत्र तच्छब्देन जनपदाः पुरुषाश्च गृह्यन्ते ।तेन सात्म्यं ह्याशु बलं धत्ते नातिदोषं च बह्वपि ।**

**पुरुषसात्म्यस्य प्रायः प्रतिपुरुषं भिन्नत्वेनानियतत्वाच्छृङ्गग्राहिकया उदाहरणस्यावश्यकता न वर्तते। अत्रैतदप्यवधेयमस्ति यद् देशाभ्याससात्म्यानि द्रव्याणि तु वैश्वानरोचितान्यपि भवन्ति। अत्रोचितशब्देनाभ्यास उच्यते । तेन तत्सात्म्ययुक्तानीति उक्तदेशसात्म्ययुक्तपुरुषसात्म्ययुक्तानि। देशसात्म्यानां द्रव्याणां निरन्तराभ्यासाद्बहुमात्रया ग्रहणादपि शरीरे काचिद् हानिर्न भवति ।अतः बह्वपि (अतिमात्रमपि) नातिदोषं भवतीति कथनं समुचितम् किन्तु निरन्तरमधिकमात्रया ग्रहणन्तु हानिकरमेव ।**

यह भारत देश उत्सवप्रधान देश है। यहाँ के लोग अनेक प्रकार की भाषाओं को बोलने वाले हैं तथा अनेक प्रकार के भूभागों में रहते भी हैं। आहार-विहार में भी भारतवर्ष में विविधता है, सभी जगह उस भूभाग के अनुरूप सात्म्यस्वरूपक आहार-द्रव्यों का और औषधियों का प्रयोग होता है । यहाँ पर 'तत्' शब्द से जनपद (नगर एवं पुरुष) ग्रहण किए जाते हैं । उसके कारण सात्म्य होने के कारण वह (आहार-द्रव्य) तत्काल ही बल प्रदान करने वाला होता है और अधिक मात्रा में लिया हुआ भी दोष करने वाला नहीं होता है । यहाँ पर प्रत्येक पुरुष में भिन्न-भिन्न प्रकार के द्रव्यों के सात्म्य की स्थिति होने के कारण सभी के लिए नियत नहीं होने के कारण **शृङ्गग्राहिक** न्याय के अनुरूप पृथक् पृथक् व्यक्तियों के लिए उदाहरण की आवश्यकता नहीं है । यहाँ पर यह भी ध्यान देने योग्य है कि देश के अनुरूप अभ्यास होने के कारण सात्म्य होने वाले द्रव्य तो उन व्यक्तियों की अग्नि के अनुरूप भी होते हैं। यहाँ पर उचित शब्द का अर्थ अभ्यास कहा जाता है। इससे वहां के अनुरूप सात्म्य के लिए उपयुक्त होने का तात्पर्य है, उन उन देशों (भूभागों) के अनुरूप पुरुषों में उपयुक्त स्वरूप से सात्म्य होने वाले द्रव्य। देशसात्म्य द्रव्य अभ्यास के कारण अधिक मात्रा में ग्रहण करने से भी शरीर में कोई हानि नहीं होती है इसलिए यहाँ पर 'बह्वपि' अर्थात् अधिक मात्रा में लेने पर भी ज्यादा दोष वाला नहीं होता है, यह कहना उपयुक्त है, लेकिन निरंतर अधिक मात्रा में लेना हानिकारक होता है।

**देशस्तु भूभागविशेष एव, भूभागविशेषादेवोत्सवेष्वपि वैशिष्ट्यं वैविध्यञ्च दृश्यते, किन्तु केचिदुत्सवास्तु समग्रे देशे सामान्यस्वरूपात्मकाः सन्ति, दीपोत्सवस्तु तेष्वन्यतमः। उत्सवस्त्वेषः हिन्दूधर्मानुयायिनामेवास्ति पुनरप्यन्यधर्मानुयायिनोऽपि प्रत्यक्षेण परोक्षरूपेण वोत्सवेनानेन सम्बद्धाः सन्तः प्रसन्नतामनुभवन्ति। न ह्येकाकी वर्तते ह्युत्सवोऽयमपितु पञ्चोत्सवानां सन्निपातो ह्ययं**

**क्रमबद्धतां सन्धारयति। एषूत्सवेषु मध्यमो ह्ययं तृतीये स्थाने समापतति, यद्यपि पञ्चैवोत्सवाः प्रमुखाः सन्ति तथापि पञ्चस्वप्येषोऽधिष्ठातृरूपेण संस्थितः।**

देश तो भूभाग विशेष ही है, भूभागविशेष होने के कारण यहाँ पर उत्सवों में भी विशिष्टता और विविधता देखी जाती है, लेकिन कुछ उत्सव तो संपूर्ण देश में सामान्य स्वरूप वाले होते हैं, उन उत्सवों में दीपोत्सव को प्रथम (प्रमुख) माना जाता है । यह उत्सव तो हिंदूधर्म के अनुयायियों का ही है फिर भी अन्य धर्म के अनुयायी भी इस उत्सव से प्रत्यक्ष या परोक्ष रूप से जुड़े हुए रहते हुए प्रसन्नता का अनुभव करते हैं ।

यह उत्सव अकेला नहीं है अपितु 5 उत्सवों का सम्मेलन है, यह सम्मेलन क्रमबद्धता को धारण करता है अर्थात् ये उत्सव एक के बाद एक आते हैं । इन उत्सवों में यह उत्सव तो मध्यम है जो तृतीय स्थान पर आता है । यद्यपि पाँचों ही उत्सव प्रमुख हैं फिर भी पाँचों उत्सवों में यह अधिष्ठाता के रूप में स्थित है।

**दीपोत्सवस्यावसरे जनाः विशेषेण श्रीमहालक्ष्मीपूजनङ् कुर्वन्ति धनाभिवृद्ध्यर्थं सुखसमृद्ध्यर्थञ्च। अवसरेऽस्मिन् दीपयज्ञो भवति, सर्वत्रैव प्रकाशमाना दीपज्योतिः तमोऽपहरणङ्करोति। कालेऽस्मिन् विशेषरूपेण विनिर्मितान् मन्द-मध्य-तीव्रध्वनिकारकान् विस्फोटकान् स्फोटयित्वा बालकाः युवानश्चानन्दमनुभवन्ति वृद्धास्तु तेषामुत्साहवर्धनङ्कुर्वन्ति कदाचिच्च स्वयमपि स्फोटान् स्फोटयित्वा बालवद्व्यवहरन्ति। वर्तमानकाले स्फोटकानां प्रयोगे वृद्धिः सञ्जाता, तेन हि पर्यावरणप्रदूषणं ध्वनिप्रदूषणञ्च भवतीति कथयन्ति केचिज्जनाः सत्यमप्येतदस्ति, किन्तूत्सवे-नानेन सह प्रगाढतमः सम्बन्धो वर्तते स्फोटकानामिति कथयन्ति परम्परावादिनः, वयमपि च कथयामः पश्यामश्च, अत एवैतेषां प्रयोगोऽस्मिन् काले करणीयोऽथवा न करणीय इति तु तर्कवितर्कस्य विषयोऽस्ति, तौ तर्कवितर्कौ त्वनन्तावेवास्मिन् विषयेऽत एव न करणीयौ ।**

दीपोत्सव के अवसर पर लोग विशेष रूप से धन की अभिवृद्धि एवं सुख समृद्धि के लिए श्री महालक्ष्मी जी का पूजन करते हैं । इस अवसर पर दीपयज्ञ होता है। सभी जगह प्रकाशित होती हुई दीपज्योति अंधकार का अपहरण करती है (दूर करती है)। इस समय विशेष रूप से बनाए गए मंद, मध्य और तीव्र प्रकार की ध्वनि करने वाले पटाखों को छोड़कर बालक एवं युवक आनंद का अनुभव करते हैं, वृद्ध लोग तो उनके उत्साह का वर्धन करते हैं और कभी-कभी स्वयं भी उन पटाखों को छोड़कर बालकों के समान व्यवहार करते हैं। वर्तमान काल में पटाखों के प्रयोग में वृद्धि हुई है, उससे पर्यावरणप्रदूषण एवं ध्वनिप्रदूषण होता है ऐसा कुछ लोग कहते हैं, यह सत्य भी है, किंतु इस उत्सव के साथ पटाखों का गहरा संबंध है ऐसा परंपरावादी लोग कहते हैं और हम भी कहते हैं तथा देखते भी हैं। इसलिए इनका प्रयोग इस काल में करना चाहिए अथवा नहीं करना चाहिए यह तो तर्क-वितर्क का विषय है, ये तर्क और वितर्क तो (इस विषय में) अनंत ही हैं इसलिए तर्क-वितर्क नहीं करनी चाहिए ।

**एतत्तु सत्यमेवास्ति यत् स्फोटकैः पर्यावरण-प्रदूषणं तु भवत्येव। अत्र त्वन्यः मध्यममार्गोऽस्त्यत एव यावत् समुचितः निर्णयो न भवति तावत्तु**

**कुर्याद्दीपोत्सवे यज्ञम्। तेन हि पर्यावरणस्य सुशुद्धिर्जायते विशेषेण। प्राचीनकाले तु गृहे गृहे प्रतिदिनमेव यज्ञस्यायोजनं भवति स्म। मुनीनामुटजेषु विशालेषु च महर्षीणामाश्रमेषु सार्वजनिकस्थलेषु च विनिर्मितेषु यज्ञशालासु विशेषरूपेण यज्ञाना-मायोजनं भवति स्म, अत एव पर्यावरणस्य शुद्धतापि विशेषरूपेणासीत्। वर्तमानकाले सर्वे भारतवासिनः प्रतिज्ञाबद्धाः भवेयुः यत् पर्यावरणं सुशुद्धं करिष्या-मस्तस्याश्च सुशुद्धतायाश्चानुवर्तनं विधाष्यामः ।**

यह तो सत्य ही है कि पटाखों से पर्यावरणप्रदूषण तो होता ही है। यहाँ तो अन्य मध्यम मार्ग है इसलिए जब तक समुचित निर्णय नहीं होता है तब तक तो दीपोत्सव के अवसर पर यज्ञ करना चाहिए । उससे निश्चित रूप से पर्यावरण की शुद्धि विशेष रूप से होती है। प्राचीनकाल में तो घर-घर में प्रतिदिन यज्ञ का आयोजन होता था। मुनियों की कुटियाओं में और महर्षियों के विशाल आश्रमों में तथा सार्वजनिक स्थलों पर निर्मित यज्ञशालाओं में विशेष रूप से यज्ञों का आयोजन हुआ करता था, इसलिए पर्यावरण की शुद्धता भी विशेष रूप से थी। वर्तमानकाल में सभी भारतवासियों को प्रतिज्ञाबद्ध होना चाहिए कि पर्यावरण को शुद्ध करेंगे और उस सुशुद्धता का अनुवर्तन करेंगे।

**ये हि हिन्दूधर्मानुयायिनः सन्ति तैस्तु येन केनापि व्याजेन यज्ञस्यायोजनं करणीयमेव। तत्तु प्रतिदिनं सप्ताहे-सप्ताहे मासान्तराले वा करणीयमेव तथा दीपोत्सवकाले तु बहुदीपप्रज्वालनानन्तरं संक्षिप्तस्य यज्ञस्याप्यायोजनमनिवार्यरूपेण करणीयम्। ये त्वन्यधर्मावलम्बिनः सन्ति तैरपि पर्यावरणशुद्धिस्तु धूपनव्याजेन करणीया। स्वल्पोऽप्येषः प्रयासः श्रेयस्करो भविष्यति। वर्तमानकाले बहवः वैज्ञानिकाः बह्व्यः संस्थाश्चैतादृग्विधेष्वनुसन्धानेषु संलग्नाः सन्ति, यैरेषः निष्कर्षः प्राप्यते यद्यज्ञेन बहुविधानां हानिकारकाणां जीवाणूनां विनाशो भवति, पर्यावरणस्य च विशुद्धिर्भवति सर्वविधैर्यज्ञैः। कैश्चिद्विशिष्टैरिन्धनैर्विशिष्टैश्चौषधिद्रव्यैर्विशिष्टैश्च विधिभिः सम्पादितेन यज्ञेन विशिष्टानां रोगाणाम-पवारणं निवारणञ्च भवति।**

जो हिंदूधर्म के अनुयायी हैं उनके द्वारा तो जिस किसी भी बहाने यज्ञ का आयोजन किया ही जाना चाहिए और वह यज्ञ तो प्रतिदिन अथवा प्रति सप्ताह अथवा महीने में एक बार करना ही चाहिए और दीपोत्सव के समय पर तो अनेक दीपों को जलाने के बाद में संक्षिप्त यज्ञ का आयोजन भी अनिवार्य रूप से करना चाहिए जो लोग तो अन्य धर्म का अवलंबन करने वाले हैं (मानने वाले हैं) उनके द्वारा भी पर्यावरण की शुद्धि तो धूपन के बहाने करनी ही चाहिए। थोड़ा सा भी किया गया यह प्रयास कल्याणकारी होगा। वर्तमानकाल में तो अनेक वैज्ञानिक और अनेक संस्थाएं इस प्रकार के अनुसंधान में लगी हुई हैं, जिनके द्वारा यह निष्कर्ष प्राप्त किया जा रहा है कि यज्ञ से अनेक प्रकार के हानिकारक जीवाणुओं का विनाश होता है। सभी प्रकार के यज्ञों के द्वारा पर्यावरण की विशुद्धि होती है । कुछ विशिष्ट इन्धनों के द्वारा और विशिष्ट औषध-द्रव्यों के द्वारा विशिष्ट विधियों से सम्पादित यज्ञ से विशिष्ट रोगों का अपवारण (बचाव) तथा (रोगोत्पत्ति हो जाए तो) रोगों का निवारण होता है ।

**यज्ञे हवनकुण्डेऽग्निप्रज्वालनार्थं समिधात्म-कानां विविधानां काष्ठानां प्रयोगो भवति, एतानि**

**काष्ठानि यादृच्छिकरूपेण नैव गृह्यन्तेऽपित्वेतानि तु प्रतियज्ञं नियतानि सन्ति। सामान्येन त्वेतानि काष्ठानि यज्ञेषु प्रयुज्यन्ते-**

**न्यग्रोधोदुम्बराश्वत्थाश्चैते क्षीरिवृक्षाः सन्त्येतेषां काष्ठानि, शमीबिल्वपलाशाशोकाम्राश्च सारप्रधानाः वृक्षाः सन्त्येतेषां काष्ठानि, चित्रकस्त्वग्निपर्यात्मकं भेषजद्रव्यमस्ति, अस्यापि प्रयोगो यज्ञे भवति, अग्निमन्थस्य काष्ठन्त्वग्निप्रज्वालकं, देवदारुचन्दनागुर्वादीनां काष्ठानि तु सुगन्धिस्वरूपात्मकानि सन्ति। एतेषु यथालाभं यथेष्टमात्रायां काष्ठं गृहीत्वा सामान्येन यज्ञः करणीयः, विधिपूर्वकस्य यज्ञस्य तु विशिष्टं नियतं निश्चितञ्च फलं प्राप्नोति यज्ञकर्ता। त्वगेलापत्रलवङ्गजातीफलेत्यादीनां च विशिष्टानां गन्धौषधीनां प्रयोगोऽप्याहुत्यर्थं भवति यज्ञे। एतदतिरिक्तं यवतिलतण्डुलादीनां धान्यानां शर्करायाश्च प्रयोगो भवत्यावश्यकरूपेणाहुतिद्रव्येषु। प्रचुरं गोघृतं विना तु यज्ञो भवत्येव न। यज्ञसम्पादने तु विशेषज्ञानां विदुषां निर्देशो लाभात्मको भवति, संक्षिप्तस्य यज्ञस्य सम्पादनन्तु स्वस्येष्टदेवतायाः स्मरणङ्कृत्वा तामेव च पुरस्कृत्य करणीयम् ।**

यज्ञ में हवन कुंड में अग्नि को जलाने के लिए समिधा के रूप में अनेक प्रकार के काष्ठों का प्रयोग होता है, ये काष्ठ इच्छा अनुसार चाहे जो ही ले लिया जाए ऐसा नहीं होता है, अपितु ये तो प्रत्येक यज्ञ में नियत होते हैं। सामान्य रूप से तो इन काष्ठों को यज्ञ में प्रयुक्त किया जाता है-

वट, गूलर एवं पीपल ये क्षीरिवृक्ष हैं, इनके काष्ठों को तथा शमी (खेजड़ी), बिल्व, पलाश, अशोक एवं आम ये सारप्रधान वृक्ष हैं, इन के काष्ठों को, चित्रक तो अग्नि के पर्याय के रूप में होता है यह भेषज-द्रव्य है इसका भी यज्ञ में प्रयोग होता है, अग्निमन्थ (अरणी) काष्ठ तो अग्नि को प्रज्वलित करने वाला होता है, देवदारु, चंदन, अगर इत्यादि के काष्ठ तो सुगंधित स्वरूप वाले होते हैं । इन सब में यथालाभ (जो भी प्राप्त हो जाए) उस काष्ठ को यथेष्ट मात्रा में लेकर सामान्य रूप से यज्ञ करना चाहिए। यज्ञकर्ता व्यक्ति विधिपूर्वक सम्पादित किए गए यज्ञ का तो विशिष्ट नियत एवं निश्चित फल प्राप्त करता है। दालचीनी, इलायची, तेजपत्ता, लवंग एवं जातीफल (जायफल) इत्यादि विशिष्ट गन्धौषधियों का प्रयोग भी आहुति के लिए यज्ञ में होता है। इसके अतिरिक्त जौ, तिल एवं चावल इत्यादि धान्यों का तथा शर्करा का प्रयोग आवश्यक रूप से आहुतिद्रव्यों में होता है। पर्याप्त गोघृत के विना तो यज्ञ होता ही नहीं है। यज्ञ के सम्पादन में तो विशेषज्ञ विद्वानों का निर्देश लाभकारी होता है / संक्षिप्त यज्ञ का सम्पादन तो अपने इष्ट देवता का स्मरण करके और उसी देवता को आगे करके करना चाहिए।

**चरकसुश्रुताभ्यां महर्षिभ्यां सूतिकागारे कुमारागारे शल्यकर्मागारे तथातुरालये धूपनार्थं विशिष्टानां द्रव्याणामुल्लेखो विहितः। विशिष्टरोगाणां निवारणप्रसङ्गेऽपि विशिष्टानां गन्धद्रव्याणां धूपनार्थं निर्देशेनैषः सङ्केतः प्राप्यते यत् प्राचीनैराचार्यैः पृथक् पृथग्रोगेषु धूपनार्थं पृथक् पृथक् द्रव्याणां प्रभावो यः प्रदर्शितः स तु बहुविधं परीक्ष्य बहुभिश्च हेतुभिः साधयित्वा निष्कर्षात्मकः निर्णयः संस्थापितः। स तु सर्वदा समानपरि-**

**णामात्मक एव भवत्यत एवैतदेवानुसन्धानमित्यपि कथयितुं शक्नुमः वयम्। यतो हि वर्तमानकालेऽपि तास्वेव परिस्थितिषु तैरेव विधिभिः कृतानि तानि तानि परीक्षणानि समानपरिणामात्मकानि भवन्त्यत एव कथयन्त्यायुर्वेदज्ञाः यत्संहितासु सिद्धान्तरूपेण निर्दिष्टानि वचनानि तु शाश्वतस्वरूपात्मकानि सन्ति।**

महर्षि चरक एवं महर्षि सुश्रु त के द्वारा सूतिकागार में, कुमारागार में, शल्यकर्मागार में (ऑपरेशन थिएटर में) तथा आतुरालय में धूपन करने के लिए विशिष्ट द्रव्यों का उल्लेख किया गया है । विशिष्ट रोगों के निवारण के प्रसङ्ग में भी विशिष्ट गन्धद्रव्यों का धूपन करने के लिए निर्देश करने से यह संकेत प्राप्त होता है कि प्राचीन आचार्यों के द्वारा भी पृथक् पृथक् रोगों में धूपन के लिए पृथक् पृथक् दृव्यों का प्रभाव जो प्रदर्शित किया गया है वह तो अनेक प्रकार से परीक्षण करने की बाद अनेक हेतु से उस परीक्षण को साधित करके निष्कर्ष के रूप में जो निर्णय संस्थापित किया गया है वह तो सर्वदा ही समान परिणाम वाला होता है, इसलिए 'यही अनुसंधान है' यह भी हम कह सकते हैं, क्योंकि वर्तमानकाल में भी उन-उन परिस्थितियों में उन-उन विधियों के द्वारा किए गए वे-वे परीक्षण समान परिणाम वाले ही होते हैं, इसलिए आयुर्वेदज्ञ कहते हैं कि संहिताओं में सिद्धान्त रूप से निर्दिष्ट वचन तो शाश्वत स्वरूप वाले हैं (सर्वदा अस्तित्व में रहने वाले हैं)।

**अत एव मुक्त्वैवं वादसंघट्टमध्यात्म-मनुचिन्त्यताम् । यतो हि पक्षसंश्रयात्तत्त्वं दुष्प्रापम् । वादान् सप्रतिवादान् हि निश्चितानिव वदन्त आयुर्वेदस्य निन्दाञ्च कुर्वन्तो जनाः तिलपीडकवद्गतौ पक्षान्तं नैव गच्छन्त्यत एवायुर्वेदीयाः सिद्धान्ताः सत्स्वरूपात्मका एव सन्ति, पुनरप्यायुर्वेदज्ञाना-मेतद्दायित्वं वर्तते यत्तादृशीष्वेव परिस्थितिषु तेषामेव सिद्धान्तानां द्रव्याणाञ्च नवीनैर्वैज्ञानिकमाप-दण्डैर्पुनरीक्षणं परीक्षणञ्च विधाय युगानुरूपसन्दर्भे जनानां सम्मुखे प्रस्तोतव्यम्। इदञ्च लक्ष्यमभि-लक्ष्यायुर्वेदीयानुसन्धानविशेषज्ञाः विभिन्नानानामा-युर्वेदीयसिद्धान्तानामीक्षणं पुनरीक्षणञ्च कृत्वा प्रकाशनं कुर्वन्ति।**

इसलिए इस वाद-विवाद की खटपट (मुठभेड़, संघर्ष) को छोड़कर तत्त्वार्थ (वस्तुस्थिति) का अनुचिन्तन (सोच-विचार) करना चाहिए, क्योंकि किसी एक पक्ष का आश्रय लेने से तत्त्व की प्राप्ति कठिनता से होती है अर्थात् नहीं होती। विभिन्न प्रकार के आरोपों और प्रत्यारोपों को या अपने वक्तव्य अथवा उसके विरोधी वक्तव्य को निश्चित यही है ऐसा बोलते हुए और आयुर्वेद की निंदा करते हुए लोग तिलपीड़क (घाणी के लट्ठ) के समान गति में (गमन में, निष्कर्ष में) पक्षान्त को प्राप्त नहीं करते हैं (निष्कर्ष तक नहीं पहुंच पाते हैं), इसलिए आयुर्वेदीय- सिद्धांत सत् स्वरूप ही हैं, फिर भी आयुर्वेदज्ञों का यह दायित्व है कि उसी प्रकार की परिस्थितियों में उन-उन सिद्धान्तों को और द्रव्यों का नवीन वैज्ञानिक-मापदंडों से पुनरीक्षण और परीक्षण करके युगानुरूपसंदर्भ में लोगों के सामने प्रस्तुत करना चाहिए, इस लक्ष्य को ध्यान में रखकर आयुर्वेद के अनुसंधानविशेषज्ञ विभिन्न आयुर्वेद के सिद्धांतों को ध्यानपूर्वक देखकर और उनका पुनरीक्षण करके प्रकाशन करते हैं ।

**धूपनद्रव्याणां यज्ञसामग्रीणां समिधानाञ्च परीक्षणङ्कुर्वन्ति यज्ञानुसन्धानकर्तारः कथयन्त्यपि च ते यत्प्राचीनैः प्रोक्ताः यज्ञविधयः पर्यावरण-विशुद्धिकारकाः सन्त्यत एव करणीयाः सन्ति यज्ञाः करणीयानि च धूपनानि। निष्कर्षो हि विद्यतेऽयं यत् 'कुर्याद्दीपोत्सवे यज्ञम्', अनेन हि पर्यावरण-विशुद्धिर्भवति। अत्र केषाञ्चिच्चरकसुश्रुतसंहितोक्तानां धूपनद्रव्याणामुल्लेखः क्रियते तेषु यथालाभं गृहीत्वा दीपोत्सवदिनेऽग्रिमेषु वा दिनेषु यज्ञः करणीयः तैरेव धूपनं वा करणीयम्। द्रव्याणां नामानि तु-**

यज्ञसंबंधी अनुसंधान करने वाले विद्वान् धूपन-द्रव्यों का और यज्ञ की सामग्रियों का तथा समिधाओं (काष्ठों) का परीक्षण करते हैं तथा वे कहते भी हैं कि प्राचीनों के द्वारा कही गई यज्ञ की विधियाँ पर्यावरण की विशुद्धि करने वाली होती हैं, इसलिए यज्ञ करने चाहिए तथा धूपन भी किए जाने चाहिए। यह निष्कर्ष है कि दीपोत्सव के समय में यज्ञ करना चाहिए, इससे निश्चित रूप से पर्यावरण की विशुद्धि होती है। यहाँ चरकसंहिता और सुश्रुतसंहिता में कहे गए कुछ धूपन-द्रव्यों का उल्लेख किया जा रहा है, उनमें जितने प्राप्त हो जाए उनको लेकर दीपोत्सव के दिन अथवा आगे के दिनों में यज्ञ करना चाहिए और उन दिनों से ही अथवा उन्हीं द्रव्यों से धूपन भी किया जाना चाहिए। द्रव्यों के नाम तो ये हैं-

**यवसर्षपातसीहिङ्गुगुग्गुलुवचाचोरकवयः-स्था (ब्राह्मी)-गोलोमी (श्वेतदूर्वा)- जटिला (मांसी)-अशोकरोहिणीत्यादीनि द्रव्याणि घृतयुक्तानि स्युः। एतदतिरिक्तमपि बहूनि गंधद्रव्याणि सन्ति येषां प्रयोगो कीटाणुनाशने दुर्गंधनाशने पर्यावरणसंशुद्धौ च भवति, यथा हि-पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी सर्षपाः सयवाः सर्पिर्धूपयेत्, निम्बविडङ्गे वृषकुटजसप्तपर्णाः करवीरकरञ्जनिम्बखदिराश्च, पलङ्कषावचा-पथ्यार्कसर्षपैः धूपयेत्। जटिलापूतनाकेशी (गोलोमी)-नाकुलीहिङ्गुचोरकैः धूपयेत्, लशुनातिरसा (जलजं यष्टीमधु)- चित्राकुष्ठैश्च धूपयेत्, गुग्गुल्वगुरुसर्जरसवचागौरसर्षप-चूर्णैर्लवणनिम्बपत्रविमिश्रैराज्ययुक्तैर्धूपयेत्। इत्थमुपरि पृथक्-पृथग्रूपेण प्रोक्तैर्द्रव्यैरथवैतेषु यथालाभगृहीत द्रव्यैर्धूपयेत्।**

यव, सरसों, अलसी, हींग, गुग्गुलु, वचा, चोरक, वय:स्था (ब्राह्मी), गोलोमी (श्वेतदूर्वा), जटिला (मांसी), अशोक, रोहिणी इत्यादि द्रव्य घृत युक्त होने चाहिए। इसके अतिरिक्त भी अन्य बहुत से गंधद्रव्य हैं जिनका प्रयोग कीटाणुनाशन में, दुर्गंधनाशन में तथा पर्यावरण की संशुद्धि में होता है, जैसे कि कहा गया है कि- गुग्गुलु, निम्बपत्र, वचा, कुष्ठ (कूठ), हरडे, सरसों इन सब में जौ मिलाकर और घी मिलाकर धूपन करना चाहिए। निम्ब, विडङ्ग, अडूसा, कुटज, सप्तपर्ण, कनेर, करञ्ज, निम्ब एवं खैर, पलङ्कषा (गुग्गुलु),वचा, पथ्या (हरडे), अर्क एवं सरसों इनके द्वारा धूपन करना चाहिए। जटिला (जटामांसी), पूतनाकेशी (सफेद दूर्वा), सारिवा, हिङ्गु एवं चोरक इन द्रव्यों के द्वारा धूपन करना चाहिए। लशुन, अतिरसा (जलज यष्टीमधु), चित्रा (दंती या एरंड) एवं कूठ इनके द्वारा धूपन करना चाहिए। लवण और निम्बपत्र मिले हुए एवं घी से युक्त

गुग्गुलु, अगुरु, सर्जरस (राल), वचा, तथा सरसों इन सबके चूर्ण के द्वारा धूपन करना चाहिए। इस प्रकार से ऊपर पृथक्- पृथक् रूप से बताए गए द्रव्यों से अथवा इनमें से यथालाभगृहीत द्रव्यों से धूपन करना चाहिए।

**चरकसंहितायां खदिरकर्कन्धुपीलुपरूषक-शाखाभिः सूतिकागृहस्य समन्ततः परिवारणं निर्दिष्टं तथा सर्वतश्च सूतिकागारस्य सर्षपातसीतण्डुल-कणिकानां प्रकिरणमपि निर्दिष्टम्। उभयकाले होमकरणस्यापि निर्देशो विहितः ।**

**वचाकुष्ठहिङ्गुसर्षपातसीलशुनानां रक्षोघ्नस-माख्यातानां गुग्गुल्वित्यादीनामौषधीनां पोट्टलिकां बद्ध्वा सूतिकागारस्योत्तरदेहल्या-मवसृजनस्यापि विधानं वर्तते तेन हि हानिकारकाणां भूतानां (जीवाणूनां कीटाणूनां वा) विनाशो वारणञ्च भवेत्। व्रणचिकित्साप्रसङ्गे महर्षिः सुश्रुतः निर्दिशति यत्क्षतातुरस्तूद्दिष्टैः रक्षाविधानैः नित्यमेव निशाचरेभ्यो रक्ष्योऽस्ति। तत्कालीनायां हि प्रकल्पितायां निशाचरसंज्ञायां वर्तमानकाले सम्बोध्यमानानां जीवाणूनां कीटाणूनाञ्चापि समावेशो भवति। अत्र संहितासु प्रोक्तस्य रक्षाविधानस्योल्लेखस्योद्देश्यस्तु एकमेवास्ति यत् सर्वदैव सर्वेषां रक्षणं निशाचरेभ्यः करणीयम्, विशेषेण तु व्रणिनां सूतिकानां ज्वरिणामन्येषाञ्च रोगग्रस्तानामातुराणां निशाचरेभ्यः रक्षणं परमावश्यकम्। प्रकारान्तरेण त्वेषः विधिः पर्यावरणरक्षणात्मक एवास्त्यत एव सर्वदैवानु-करणीयः, विशेषेण तु दीपोत्सवकाले स्फोटकेभ्यः यदा पर्यावरणप्रदूषणं भवति तदा तु परमोपयोगी ।**

चरकसंहिता में खैर, बेर, पीलु एवं फालसे की शाखाओं से सूतिकागार के चारों ओर परिवारण निर्दिष्ट किया गया है तथा सूतिकागार के चारों ओर सरसों, अलसी एवं चावल के कणों का प्रकिरण (बिखेरना) भी निर्दिष्ट किया गया है तथा दोनों समय में होम करने का निर्देश भी है ।वचा, कूठ, हींग, सरसों, अतसी, लहसुन तथा रक्षोघ्न-द्रव्यों में कहे गए गुग्गुलु इत्यादि औषधियों की पोट्टली को बांधकर सूतिकागार की उत्तर देहली में रखने का भी विधान है ।उससे निश्चित रूप से हानिकारक प्राणियों का (जीवाणुओं का और कीटाणुओं का) वारण (बचाव) होता है। व्रण-चिकित्सा के प्रसङ्ग में महर्षि सुश्रुत निर्देश करते हैं कि क्षतातुर (व्रण का रोगी) तो कहे गए रक्षाविधानों के द्वारा नित्य ही निशाचरों (जीवाणु इत्यादि प्राणियों) से नित्य ही रक्षा करने के योग्य हैं। उस समय में प्रकल्पित की गई निशाचर संज्ञा में वर्तमानकाल में कहे जाने वाले जीवाणुओं और कीटाणुओं का भी समावेश हो जाता है। यहाँ संहिताओं में कहे गए रक्षाविधान का उल्लेख करने का उद्देश्य तो एक ही है कि सदा ही सभी का रक्षण निशाचरों से किया जाना चाहिए, विशेष रूप से तो व्रण के रोगियों का और प्रसूताओं का तथा ज्वर के रोगियों का एवं अन्य रोगों से ग्रस्त रोगियों का भी निशाचरों से रक्षण करना परमावश्यक है। प्रकारान्तर से तो यह विधि पर्यावरण का रक्षण करने वाली ही है, अतः सर्वदा ही अनुकरण करने योग्य है, विशेष रूप से तो दीपोत्सव के समय में पटाखों से जब पर्यावरणप्रदूषण होता है तब तो यह परमोपयोगी है।

प्रेषण-प्रत्येक माह की ५ तारीख सी.एस.ओ. गांधीनगर, जयपुर
पंजीयन क्रमांक (भारत) आर. एन. आई. ३७५८-५७

डाक पंजीयन
Jaipur City/405/2021-23




स्वत्वाधिकारी-भारतीयसंस्कृतप्रचारसंस्थानम्, राजस्थानम् अध्यक्षः शंकरप्रसादशुक्लः प्रकाशको मुद्रकश्च माणकचन्द माहेश्वरी द्वारा न्यू जय शिवा प्रिन्टर्स, गोपालबाड़ी, जयपुरम् दूरभाषः २३६५७२१ पत्रसंकेतः- भारतीभवनम्, बी-15, न्यू कॉलोनी, जयपुरम्-३०२००१ • दूरभाषः ०१४१-२३७९०१४

प्रतिष्ठायाम्,